॥ श्रीः ॥

श्रीमदन्नम्भट्टविरचितः

# तर्कसंग्रहः ॥

तस्य व्याख्या च

# सुखप्रवेशिनी ॥

तर्कार्णवेन शिरोमणिना

( उत्तमूर् )

ति. वीरराघवाचार्येण

विरचिता



श्रीतञ्जापुरसन्निकृष्टपञ्चनदस्थे

श्रीनिवासमुद्रणालये

मुद्रितः ।

मूल्यम्] 1934 [रू १–०–०

# भूमिका ॥



एकः—सखे सुन्दर ! क्षोदक्षमं सार्वभौमं ते पाण्डित्यमिति सन्तुष्यामि ।

अन्यः—किं भोः परिहासेन ? अधीतप्रायेऽपि तर्कशास्त्रे सन्ति शास्त्रान्तराणि सामग्र्येणाधिगन्तव्यानि, येषु मे सम्प्रति स्वल्प एव परिचयः ।

एकः—प्रकरणग्रन्थाः परिचिताः । इतस्ते कस्तत्र श्रमः । अस्माकं पुनरधीतमप्यनधीततुल्यम् ।

अन्यः—कथमेवमेकपदे सर्वथा जाड्यमभिनयसि ।

एकः—नायमभिनयः; यदस्ति तदुच्यते । यदि पुनर्नाटकादिपठनमेव नः कृत्यमभविष्यत् , नूनमयं क्लेशो न व्यज्ञास्यत । अलङ्कारग्रन्थाः पुना रसगङ्गाधरप्रभृतयः परीक्षार्थे परिक्लृप्तास्तर्कपद्धतिपरिष्कृता न बुद्धिमारोहन्ति ; न पठितुं शक्यन्ते ।

परः—सत्यमाह मित्रम् । विनैव काव्यानुवचनं सदा शास्त्रग्रन्थानेवाऽऽवर्तयतामपि प्रक्रियाभाग एव नः पाण्डित्यम् । मञ्जूषाभूषणसारादयस्तु तर्कसरणिमनुसरन्तः प्रायो दुरवगाहाः । का कथा व्युत्पत्तिवादविज्ञाने ।

अन्यः—ईदृशः श्रमो मीमांसाध्यायिनां न भवेदित्यालोचयामि ।

अपरः—वस्तुतस्तर्कशास्त्रे कियानपि प्रवेशो नःप्रवेशपरीक्षासमय एवावश्यकः। अन्यथा मीमांसापठनेऽप्यार्हन्ती न गण्यते । एवमप्यादरेणापठनादल्पमत्र ज्ञानं न भाट्टदीपिकादौ तर्कविद्भिरचिते धारणप्रवचनपर्यन्तविधानाय प्रभवति । न तरां भाट्टरहस्ये ।

अन्यः–(इतरमवलोक्य) सखे ! किमेवमवनतमुखो जोषमासीनो ध्यानपर इव लक्ष्यसे ।

इतरः—किं ब्रह्म ध्यायामि । सुहृन्मणयो हृदयमुद्घाट्य शोचन्ति । अहं पुनरन्तर्विषण्णोऽस्मि । किं मे वक्तव्यमस्ति । एकतो मीमांसान्यायमेदुरेषु यत्र क्वचिद्व्याकरणस्पर्शिषु विशेषतस्तर्कनिकरपरिबृंहितेषु सिद्धिब्रह्मानन्दीयशतदूषणीन्यायसिद्धाञ्जनादिषु कथं नामानधीततर्कः पिपठिषामप्यधिगन्तुमलम् ।

अन्यः–किमेवं सर्वेऽप्येकमुखं भाषन्ते । सुहृन्मणयः ! यावद्यावत्तर्कशास्त्रग्रन्थे परिज्ञानम् , तावत्तावच्छास्त्रान्तरेषु सर्वत्र शोधनक्षमं शेमुषीप्रसरणमिति सत्यम् । अथापि मुक्तावलीपर्यन्तप्रकरणग्रन्थः प्रवेशतः प्रागेवाध्याप्यत इति कथं नु व एतावानायासः ?

इतरः—अध्याप्यते । अथापि सुखप्रवेशस्तत्र नेति तदात्वे बुद्धेः परिश्रमं दातुमनिच्छन्तः उपेक्षितवन्तः स्मः । तदिदं साम्प्रतं क्लेशे पर्यवसितम् ।

परः–तावान्परिश्रमस्तदैव चेत् क्रियते, किमिति तर्ककक्ष्याप्रवेशं परित्यक्ष्यामः । अधीते हि तर्के पश्चादश्रमेण सर्वमध्येतुं शक्यम् ।

अपरः–सत्यम् । अयमत्र क्लेशः । तर्कसंग्रहो हि प्रथममधीयते । स चेत् केवलं प्रतिपदार्थमात्रग्रहणेनाधीयते, नोपरि ग्रन्थेषु सुलभः प्रवेशः । अत एव शाब्दबोधपद्धतिमपि तत्राध्यापकाः प्रदर्शयन्ति । यदि तया पद्धत्याऽधीयते, तत्र न सकृच्छ्रवणमात्रेण सर्वं बुद्ध्यत इति चिन्तनाऽपेक्षिता । तत्राध्यापकेनोच्यमानमन्यादृशम् । चिन्तनागुरुसरणिरन्यादृशी । पुनः प्रश्ने पुनरध्यापको बुद्धिबलेनान्यथा वक्ति । तत्र न किञ्चित् प्रतिष्ठितं भवति । एवमशक्त्या तदा विरतोद्योगाः

पश्चाद्दीपिकामुक्तावल्यादिषु कथं पदमर्हन्ति ?

अन्यः—सह व्याख्यानेन संग्रह आवर्तनीयः ।

इतरः—सन्ति परं व्याख्याः । बोधप्रकारः कुत्रापि न सम्यगदर्शि । पट्टाभिरामादयस्तु क्वचिद्बहु वदन्ति । अन्यत्र जोषं गच्छन्ति । अपरत्र स्खलन्ति । न वा संपूर्णं बोधवर्णनं व्याख्यानं किञ्चिदस्तीति शृणुमः ।

एकः—श्रुतं मया साम्प्रतमेकं व्याख्यानं **सुखप्रवेशिनी** नाम प्रचारोन्मुखं, यत्रापेक्षितोंशः प्रायः सर्वः समस्तीति । आपि दृष्टं सुन्दर !

अन्यः—इदमेवाहमप्यावेदयितु प्रवृत्तः । प्रायेण हि प्रौढग्रन्थकारैः सर्वमपि शास्त्रं तर्कशास्त्रीकृतम् । तदस्याः सुखप्रवेशिन्याः सावधानमध्ययने सर्वत्रापेक्षिते सुखः प्रवेशो भवति । तन्मुखेनोत्साहेनाधीतान्यप्रकरणग्रन्थानां मीमांसावेदान्तसाहित्यव्याकरणादिषु तत्र तत्र सुखः प्रवेशः । तदिदं व्याख्यानं सुहृद्भिरादरेण ग्राह्यम् । अवश्यं च प्रचारं प्रापणीयम् ।

सर्वे—अहो ! भाग्यम् ! महान् लाभः ! तथैव करिष्यामः । सर्वमतः सम्पत्स्यते ।

# शोधनिका ॥

| पुट | पंक्तिः | |
|---|---|---|
| १ | १० | एताः सकला |
| ६ | ८ | प्रवृत्तः आदौ |
| ७ | १९ | शब्दार्थस्याभे |
| ९ | १८ | विभागवाक्य |
| १२ | २४ | तात्मत्वरूप |
| १६ | ७ | गन्धोऽस्या अ |
| १८ | १६ | प्रतियोगिनि चा |
| १९ | १८ | तावदिति । |
| ,, | २३ | च्छीतजल |
| २१ | २१ | यार्थ आश्र |
| २४ | १७ | सर्वेषु अपि श |
| २६ | १८ | कालवृत्तीत्यर्थः |
| ३० | १७ | कारे जीवपदेन |
| ३२ | १९ | सुख |
| ३९ | २०-२१ | स्वभिन्नसंख्या |
| ५३ | ११ | विशिष्टमुद्दिश्य |
| ५६ | ७ | कारणेऽव्याप्ति |
| ५९ | ८ | निष्ठसम्बन्धः |
| ६० | २१ | शब्दस्य सं |
| ,, | २२ | तविषयिताव |
| ६१ | २४ | निष्ठश्रोत्र |
| ६८ | १८ | कं च महानसाद्यवच्छि- [न्नं वा य |

| पुट | पंक्तिः | |
|---|---|---|
| ७० | २२ | विशिष्टमित्य |
| ७१ | १२ | करणम् |
| ७२ | ८ | सतिसप्तमी |
| ,, | २३ | यश्च न मिथो |
| ७६ | १ | महानसम् |
| ,, | ६ | यत्प्रकारवि |
| ,, | ८ | विशेष्यता |
| ७९ | १० | व्याप्यत्वान्य |
| ८० | २४ | निरूपण |
| ८१ | ६ | नुमानोपमानेति |
| ८२ | ४ | क्तप्रत्ययेन |
| ८४ | ११ | निर्धारणम् |
| ८५ | ३ | तने पद |
| ८८ | ३ | वैशिष्ट्यज्ञानं |
| ९१ | २४ | स्मृतिरित्यादिना |
| ९६ | ३ | कुञ्चनम् |
| ,, | ५ | सामान्यम् |
| ९८ | ८ | प्रतियोगिनो या |
| ९९ | १२ | नाशेत्यादिर्थ |
| १०२ | १ | रियत्वं प्रयोजकत्वरूपं चतुर्थ्यर्थो |



॥ श्रीः ॥

# तर्कसंग्रहः ॥

सुखप्रवेशिनीसमेतः



निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः ॥

## सुखप्रवेशिनी ॥

श्रीशैलकृष्णमेघाय श्रितसर्वेष्टवर्षिणे ।
अनवद्याय कस्मैचिदस्मै श्रीनिधये नमः ॥ १ ॥

नमो लक्ष्मीहयास्याय शुद्धाय ब्रह्मरक्षिणे ।
कलाधिदेवता एता सकला यत्कलाश्रिताः ॥ २ ॥

सन्त्येव संग्रहव्याख्या बह्व्यः संक्षिप्तविस्तृताः ।
सुखप्रवेशिनी सेयमुपकाराय भूयसे ॥ ३ ॥

लक्षणादिपरिष्कारा लक्षिता दीपिकादिभिः ।
अतोऽत्रावश्यविज्ञेयमादौ संगृह्य दर्श्यते ॥ ४ ॥

प्रौढग्रन्थेष्वनायासप्रवेशाऽऽधित्सया पुनः ।
प्रायशोऽत्र विपश्चिद्भिर्बोधवादः प्रशस्यते ॥ ५ ॥

प्राज्ञानां बुद्धिवैचित्र्याद्भिन्ना बोधोक्तिपद्धतिः ।
वैयाकुलीं विसृज्यादौ बालैराद्रियतामियम् ॥ ६ ॥

यदि क्वचन यत्किञ्चिदन्यथेतीह भाव्यते ।
क्रमेण शोध्यतां नाम को न गच्छन् स्खलत्पदः ॥ ७ ॥

प्रारम्भे संग्रहः पाठ्यो बालैः प्रायेण काव्यवत् ।
अथेयं टिप्पणी धार्या सुधीभिरनसूयुभिः ॥ ८ ॥

तत्रभवानन्नंभट्टस्तर्कशास्त्रप्रमेयं न्यायवैशेषिकनिष्णातनिपुणमतिनिर्धारितं निरूपयितुं प्रवृत्तो यथाचारं मङ्गलमारचयन् चिकीर्षितं प्रतिजानीते निधायेति । प्रेक्षावत्प्रवृत्त्युपयोग्यनुबन्धिचतुष्टयमुत्तरार्धे दर्शितम् । बालानामित्यधिकारी । सुखबोधायेति प्रयोजनम् । तर्केति विषयः । संग्रह इति प्रतिपाद्यप्रतिपादकभावः सम्बन्ध इति ।

अथ शाब्दबोधप्रक्रियावगमसौकर्यायायमत्यल्प उपोद्घातः क्रियते । १. एकैकस्मिन्नपि पदे प्रकृतिप्रत्ययविभागेनाप्यर्थो विवेचनीयः । २. तत्र प्रत्ययस्य सोऽर्थो वक्तव्यः, योऽर्थ उत्तरत्राश्रयतासम्बन्धेनान्वियात्, यस्मिंश्चार्थे प्रकृत्यर्थः प्रायो निरूपितत्वसम्बन्धेन । यथा भूतले घट इत्यत्राधेयत्वं सप्तम्यर्थ इत्येवम् । ३. तथा समस्तपदेषु विगृह्यार्थो विवेक्तव्याः । तत्र विग्रहार्थो बुद्धिवैशद्यमात्रोपयोगिनस्तत्पुरुषादौ । लक्षणया प्रतिपाद्यमानः समासार्थ एव शाब्दबोधाकारे प्रविष्टः । यत्र तु समासे न लक्षणा, तत्र विग्रहार्थसमासार्थयोर्न वैलक्षण्यम् । तत्र तत्पुरुषे प्रायः पूर्वपदे लक्षणा । बहुव्रीहौ च पूर्वपदं तात्पर्यग्राहकम् उत्तरपदे लक्षणा । लक्ष्यश्चार्थस्तत्पुरुषे, पूर्वपदस्य विग्रहे प्रत्ययान्तस्य योऽर्थस्तदाश्रयपर्यन्तः । यथा राजपुरुष इत्यत्र राजपदस्य राज्ञः पुरुष इति विग्रहात् राजस्वत्वाश्रयपर्यन्तो लक्ष्यः । तस्याभेदसम्बन्धेन पुरुषेऽन्वयः । बहुव्रीहौ च समस्तपदस्य यत्पदविशेषणत्वम् , तत्पदार्थेऽभेदान्वययोग्योऽर्थो लक्ष्यः । यथा पीताम्बरो हरिरित्यत्राम्बरपदस्य पीतरूपवदम्बरविशिष्टोऽर्थः । ४. तथा

समानाधिकरणप्रयोगे विशेषणविभक्तीनामभेद एवार्थः ; अथ वा निरर्थकत्वमेव । अभेदसम्बन्धेन विशेषणस्य विशेष्येऽन्वयः । ५. एवं सर्वत्र प्रथमान्तपदार्थस्यैव शाब्दबोधे मुख्यविशेष्यत्वम् । क्वचिदेव त्वन्यथा । ६. एवं बोधे सम्बन्धविधया भासमानानामपि बोधाकारलेखने प्रकारविधया प्रदर्शनं व्युत्पादनसौकर्याय । ७. तथा आधेयता अधिकरणतेत्यादिराधेयाधिकरणादिनिष्ठो धर्मः । तत्राधेयताधिकरणतयोः, प्रतियोगितानुयोगितयोः, विशेष्यताप्रकारतयोः, विशेष्यतासंसर्गतयोः, संसर्गताप्रकारतयोः, प्रकारताप्रकारितयोः, विशेष्यताविशेष्यितयोः, संसर्गतासंसर्गितयोः, विषयताविषयितयोः, अवच्छेदकताऽवच्छिन्नतयोरेवञ्जातीययोर्मिथः सापेक्षधर्मयोर्निरूप्यनिरूपकभावः । आधेयतानिरूपिताऽधिकरणता, अधिकरणतानिरूपिता आधेयतेत्येवम् । विशेष्यिताप्रकारितयोः प्रकारितासंसर्गितयोरेवंविधयोर्धर्मयोर्मिथोऽवच्छेद्यावच्छेदकभावः । विशेष्यित्वावच्छिन्ना प्रकारिता, प्रकारित्वावच्छिन्ना विशेष्यितेत्येवम् । तत्र धर्मयोरेकनिष्ठत्वेऽवच्छेद्यावच्छेदकभावः, भिन्ननिष्ठत्वे च निरूप्यनिरूपकभावः । विशेष्यित्वं हि ज्ञाननिष्ठं, प्रकारित्वादिकमपि । आधेयन्त्वन्यत् अधिकरणं चेतरादिति । एवं यथाऽऽधेयतानिरूपिताधिकरणता भवति, तथाऽऽधेयनिरूपिताऽपि । आधेयं चाधिकरणतां प्रति निरूपकम् । एवमधिकरणनिरूपिताऽऽधेयता, आधेयतानिरूपकमधिकरणम् । एवमन्यत्र । अत्र न परस्परनिरूप्यनिरूपकभावः । अपि त्वाधेयत्वादिधर्मस्य निरूपितत्वम् । अधिकरणादिपदार्थस्य निरूपकत्वमेवेति । ८. एवमाधेयतादीनामुक्तधर्माणां तत्र तत्रावच्छेदकमपि किञ्चिद्भवति । यद्धर्मपुरस्कारेण वस्तुन्याधेयत्वादिकं गृह्येत, स धर्मस्तत्राधेयतादावच्छेदकः । यथा घट आधेय इत्युक्तौ घटत्वपुरस्कारेण घट आधेयता गृह्यत इति घटत्वमाधेयतावच्छेदकम् , घटत्वेनावच्छिन्नाऽऽधेयतेत्यादिकमवहितचित्तैस्तत्र तत्र विज्ञेयमिति ॥

निधायेत्यादि । विश्वस्येशं विश्वेशम् । ईशो नियन्ता नियमनाश्रयः । नियमनमिच्छाविशेषः । षठ्या विषयित्वमर्थः । तत्र विश्वपदार्थस्य निरूपितत्वसम्बन्धेनान्वयः । अथ तस्याश्रयतासम्बन्धेन नियमने । तथा च विश्वनिरूपितविषयिताश्रयनियमनाश्रयमिति विग्रहार्थः । तत्पुरुषसमासत्वाच्चात्र पूर्वपदस्य विश्वनिरूपितविषयितावदिति लक्षणयाऽर्थः ; विश्वविषयकमिति यावत् । तस्याभेदसम्बन्धेन नियमनेऽन्वयः । विश्वविषयकाभिन्ननियमनाश्रयमिति विशिष्टार्थः । द्वितीयार्थो विशेष्यित्वं निधायेति धात्वर्थेऽन्वेति । तस्य निपूर्वकधाङ्धातोराधेयत्वप्रकारकारोपोऽर्थः । हृदीति सप्तम्यर्थो निरूपितत्वम् । हृत्पदार्थस्य हृदयस्य निरूपितत्वसम्बन्धेन निरूपितत्वेऽन्वयः । निरूपितत्वमपि हृदयमादायैव निरूपणीयम् । सप्तम्यर्थस्य धात्वर्थैकदेशे आधेयत्वे । तथा च विश्वेशनिरूपितविशेष्यित्वाश्रय , हृदयनिरूपितनिरूपितत्वाश्रयाधेयत्वप्रकारकारोपेति विशिष्टार्थः । अथ वा हृदि निधाय मनसिकृत्य मनोजन्यबुद्धौ विषयीकृत्य । ज्ञानसामान्यस्य मनोजन्यत्वेऽपि हृदीत्यभिधानं विषयान्तरतो निरुद्धेन विशुद्धेन मनसोत्पाद्यत्वाभिप्रायेण । अत एव ग्रन्थकारेणैव दीपिकायां 'तद्ध्यानपरो भूत्वे' त्युक्तम् । तथा च हृच्छब्दो विषयान्तरासंवलितचिन्तनरूपज्ञानविशेषलाक्षणिकः । निधायेति धातोर्विषयीकरणं विषयतानुकूलव्यापारोऽर्थः । निरूपितत्वमेव सप्तम्यर्थः । अस्य विश्वेशमिति द्वितीयार्थाधेयत्वस्य च विषयतायामन्वयः । तथा च विश्वेशनिरूपिताधेयताश्रय,ज्ञानविशेषनिरूपितनिरूपितत्वाश्रय, विषयतानुकूलव्यापारेति विशिष्टार्थः । ल्यप उत्तरकालिकत्वमर्थः । धात्वर्थस्य तत्र निरूपितत्वसम्बन्धेनान्वयः । तस्य च क्रियत इति कृतावाश्रयतासम्बन्धेन ।

विधाय गुरुवन्दनम् । गुरोर्वन्दनम् गुरुस्स्वस्मादुत्कृष्ट इति ज्ञा-

नानुकूलो व्यापारः । अतो वन्दनं स्वावधिकोत्कृष्टत्वप्रकारकज्ञानानुकूलव्यापारः । गुरोरिति षष्ठ्यर्थो विशेष्यित्वं वन्दनपदार्थैकदेशे ज्ञानेऽन्वेति । समासत्वात्तु गुरुपदं गुरुविशेष्यके लाक्षणिकम् । तस्याभेदेन ज्ञानेऽन्वयः । ये त्वेतादृशस्थले एकदेशान्वयं न स्वीकुर्वन्ति, तैर्गादाधरः पञ्चलक्षण्यादिग्रन्थः परिशीलनीयः । वन्दनमिति द्वितीयार्थो विषयित्वं विधायेति धात्वर्थेऽन्वेति । विधानं कृतिः । ल्यबर्थादिकं पूर्ववत् ।

**सुखबोधाय बालानाम्** । बालाः प्रकृतज्ञानकामत्वेऽपि क्लेशासहिष्णवः । षष्ठ्यर्थः समवेतत्वम् ; बोधान्वयि । सुखेन बोधः सुखबोधः । तृतीयेति योगविभागाद्वा 'कर्तृकरणे कृता बहुलम्' इति बहुलग्रहणाद्वा समासः । यद्वा सुखसहितो बोधः सुखबोधः । अथ वा सुखो बोधः सुखबोधः । सुखपदमक्लेशविशिष्टपरम् । बाला हि लोके क्लेशसाध्ये कार्ये न प्रवर्तेरन् । अतः प्रकृते बोधे क्लेशः पूर्वं नापेक्षितः । अक्लेशे स्थित एव बोधः स्वयंभवतीत्युच्यते सुखबोधेत्यनेन । बोधो ज्ञानम् । उद्देश्यित्वं चतुर्थ्यर्थः कृत्यन्वयि । **क्रियते** इत्यत्र यकः कर्मत्वं प्रकृते विषयत्वमर्थः । कृतेस्तत्रान्वयः । तस्य च तर्कसंग्रहपदार्थे । कर्त्राकांक्षायां मयेत्यध्याहार्यम् । अयमस्मच्छब्दोऽन्नम्भट्टार्थकः । समवेतत्वं तृतीयार्थः कृत्यन्वयि । **तर्कसंग्रह**पदस्य तर्क्यन्ते प्रतिपाद्यन्त इति तर्काः पदार्थास्तेषां संग्रहः संक्षेपेण कथनम् संकुचितज्ञानजनकशब्दप्रयोगः । तथा च तर्कविषयकाभिन्नसंकुचितज्ञानजनकशब्दप्रयोग इति विशिष्टार्थः । तर्कपदस्य हि तर्कविषयके लक्षणा ; तस्य च ज्ञानेऽभेदेनान्वय इति । एवंरूपत्वादेवास्य ग्रन्थस्य तर्कसंग्रह इति नाम । अत्र चेदं पदं ग्रन्थकृत्सङ्केतवशायोगरूढ्या विलक्षणानुपूर्वीकप्रकृतग्रन्थपरम् ।

तथा चायमखण्डवाक्यार्थबोधः—विश्वविषयकाभिन्ननियमनाश्रयनि-

**द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः ।**

रूपिताधेयताश्रय, ज्ञानविशेषनिरूपितनिरूपितत्वाश्रय, विषयत्वानुकूलव्यापारनिरूपितोत्तरकालिकत्वाश्रय, गुरुविशेष्यकाभिन्न- स्वावधिकोत्कर्षप्रकारकज्ञानानुकूलव्यापारनिरूपितविषयित्वाश्रयकृतिनिरूपितोत्तरकालिकत्वाश्रय, क्लेशासहिष्णु (प्रकृतज्ञानकाम) निरूपितसमवेतत्वाश्रयक्लेशविशिष्टाभिन्नज्ञाननिरूपितोद्देश्यित्वाश्रय, (अन्नम्भट्टनिरूपितसमवेतत्वाश्रय) कृतिनिरूपितविषयत्वाश्रयस्तर्कसंग्रहग्रन्थ इति ।

एवं पदार्थानां संग्रहे प्रवृत्ते आदौ तान् सप्तधा विभजते द्रव्येति । ननु 'सामान्यवचनं पूर्वं विशेषस्य ततः पर' मिति न्यायात् पदार्थसामान्यलक्षणं प्रागभिधाय पश्चाद्विभागवचनमेव युक्तम् । न हि पशुस्वरूपमेवाजानतः कतिविधः पशुरिति जिज्ञासा सम्भवति । अतो विभागजिज्ञासाभावात् तद्वचनं न युक्तमिति चेत् सत्यम् ; तथाऽपि तर्कसंग्रह इत्यत्र तर्कपदार्थपरिशीलनेन तर्क्यमाणत्वं प्रतिपाद्यमानत्वमित्येवंरूपं वा तर्कसंग्रहः क्रियत इति वाक्यश्रवणेन प्रकृतग्रन्थप्रतिपाद्यमानत्वरूपं वा सामान्यं गृहीतमासीदिति विभागवचनं युक्तम् । यद्यप्युत्तरत्र द्रव्यादिविभागस्थले कथं सामान्यलक्षणमनभिधाय तद्वचनमिति शङ्कायामियं परिहारगमनिका न भविष्यति ; तथाऽपि द्रव्यगुणकर्मेत्येवमासेन प्रयुक्तत्वात् द्रव्यादिपदस्य प्रवृत्तिनिमित्तमितरव्यावृत्तं किमपि किमपि स्यादेवेत्येवं शिष्यस्य ज्ञानसम्भवात् तथाभूतसामान्यधर्मज्ञानमेव विभागवचने पर्याप्तम् । अन्यादृशलक्षणं तु यावत् लक्ष्येयत्ताज्ञानं न भवति तावत् न शक्यं सम्यग्ज्ञातुमित्यभिप्रेत्य विभागारम्भ इति द्रष्टव्यम् । **पदार्था** इति । पदस्य अर्थः पदार्थः अर्थोऽभिधाविषयः शक्तिविषयः । विग्रहे पदस्येति षष्ठ्यर्थ आधेयत्वं शक्तावन्वेति । केन सम्बन्धेनाधेयत्वमिति त्वन्य-

त् । समासे च पदशब्दस्य पदगतेति लक्षणयाऽर्थः पदगताभिन्नशक्तिविषय इति पदार्थशब्दार्थः । पदार्थाः पदगतशक्तिविषयाः, वाच्या इति यावदित्यलम् ।

अत्र केचिदित्थं बोधं वर्णयन्ति । द्रव्यादिपदानि द्रव्यत्वादिपराणि । सप्तेत्यस्य सप्तविधाः सप्तविभाजकधर्मवन्त इत्यर्थः । विभाजकधर्मेत्यत्र द्रव्यत्वादीनामभेदेनान्वयः । सप्तेति विभक्त्यर्थश्चाभेद एव । तथा च पदार्था द्रव्यत्वगुणत्वकर्मत्वसामान्यत्वविशेषत्वसमवायत्वाभावत्वाभिन्नसप्तविभाजकधर्मवदभिन्ना इति । नैतद्युक्तम् ; द्रव्यादिपदानां लक्षणाकल्पनस्य क्लिष्टत्वात् । एवं लक्षणयार्थबोधनमपेक्ष्य शक्त्या तद्बोधनस्य न्याय्यतया, द्रव्यत्वगुणत्व.... ....भावत्वानि सप्तपदार्था इति यदि प्रयोगः क्रियेत, स साधुः स्यात् । यद्यप्येवमापत्तिं केचित् स्थलान्तरे स्वयमेवोद्भाव्य, विभागवाक्येषु धर्मिवाचकधर्मलाक्षणिकशब्दप्रयोगे सत्येव बोधोऽन्यथा नेति नियमः कल्प्यत इति समादधुः ; अथापि नावचकं प्रयोक्तव्यमिति न्यायविरुद्धं लाक्षणिकमेव प्रयोक्तव्यमिति नियमकल्पनं न हृदयङ्गमम् । अतो द्रव्यादिपदे लक्षणाङ्गीकारे सप्तपदे लक्षणां विनैव पदार्था इत्यस्य पदार्थविभाजकधर्मा इत्यर्थं स्वीकृत्य द्रव्यत्वाद्यभिन्नाः सप्त पदार्थविभाजकधर्मा इति बोधवर्णनमितः साधीयः ।

अन्ये पुनः, इति सप्त पदार्था इति इतिशब्दमध्याहृत्य सप्तपदस्य सप्तविधार्थकतया तद्धटकविधापदार्थविभाजकधर्मेष्वितिशब्दस्याभेदेनान्वयः । इतिशब्दार्थः प्रकारः, द्रव्यादिपदयथाश्रुतार्थस्य चेतिशब्दार्थे आधेयतासम्बन्धेन । द्रव्यादिवृत्तिप्रकारश्च द्रव्यत्वादिरूप इति सम्भवत्यभेदः । तथा च द्रव्यादिनिष्ठप्रकाराभिन्नसप्तविभाजकधर्मवदभिन्नाः पदार्था इति बोधं मन्यन्ते । तदपि न रुचिरम् ; इतिशब्दार्थस्य प्रकारस्योत्तरपदार्थेऽभेदेना-

न्वयस्यादर्शनात् । घट इति द्रव्यमिति हि प्रयुज्यते, न पुनर्घट इति जातिरिति । तत्र च घटनिष्ठप्रकारविशिष्टं द्रव्यमिति बोधः । उक्तं च कैश्चिदन्यत्र 'अव्ययनिपातातिरिक्तनामार्थस्यैव नामार्थेऽभेदसम्बन्धेनान्वयस्य व्युत्पत्तिसिद्धत्वा' दिति । अतो यदि इतिशब्दाध्याहारः, तर्हीतिशब्दस्य हेतुपरतया प्रयोज्यत्वमर्थमङ्गीकृत्य द्रव्यगुणकर्माद्यभेदप्रयोज्यसप्तविधत्वविशिष्टाभिन्नाः पदार्था इत्येवञ्जातीयकबोधस्वीकारः श्रेयान् । किञ्चैवं 'द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थाना' मिति कणादसूत्रभाष्ये कथं बोधः । न हि तत्रेतिशब्दाध्याहारः सम्भवति । समवायानामित्यस्याप्रथमान्तत्वात् । तत्र पदार्थानामित्यत्रैवाभेदसम्बन्धेनान्वय इति चेत् अत्रापि तथैवास्तु, अविशेषात् । अध्याहारं विनैवोपपत्तौ तस्यायुक्तत्वाच्च ।

ननु पदार्थानां सप्तत्वपर्याप्त्यधिकरणत्वं न सम्भवति, तेषामनन्तत्वात् । अतः सप्तपदस्य सप्तविधा इत्येवार्थः । तत्र च विधेत्यनेन केषां विभाजकधर्माणां ग्रहणमिति जिज्ञासायां द्रव्यत्वादिरूपधर्माणामिति लाभार्थं द्रव्यगुणेति पदं प्रयुक्तम् । तदत्र यदि तत्पदार्थस्य विधेत्यत्रान्वयो न स्वीक्रियते कथं तर्हि जिज्ञासाशान्तिरिति चेत ; पदार्थानामनन्तत्वादन्वयासम्भवात्, सप्तपदस्य सप्तविधा इत्यर्थः कामं स्वीक्रियताम् । अथापि न द्रव्यगुणेऽति द्रव्यत्वगुणत्वादिपरत्वं, किं तु यथाश्रुतार्थकत्वमेव । तस्य च पदार्थशब्दार्थ एवान्वयः, न सप्तपदार्थैकदेशे । तथाच द्रव्यत्वादिविशिष्टाभिन्नाः सप्तविधाभिन्नाः पदार्था इत्येव बोधः । एवञ्च 'अरुणयैकहायन्या सोमं क्रीणाती'त्यत्रारुणापदार्थ एकहायनीपदार्थश्च पृथक्पृथक्क्रियायामेवान्वेतीति वादिनां मते अरुणया क्रीणाति, एकहायन्या क्रीणातीत्येवार्थलाभात् या एकहायनी सैवारुणेति कथं ज्ञायते अरुणापदेनान्यस्यापि ग्रहणसंभवादिति शङ्कायां यथा अरुणयैकहायन्या क्रीणातीत्येकवाक्योपादानबलात्सन्निहितै-

कद्दायन्या एवारुण्यमिति बुद्ध्यत इति निर्वाहः, तथात्राप्येकवाक्योपादानबलाद्ये द्रव्यत्वादयस्त एव सप्त विधा इत्यत्र विभाजकधर्मा इति बुद्ध्यत इति निर्वाहः कार्य इति जिज्ञासाशान्तिसिद्धिः । एवं शाब्दबोधे भानमस्वीकृत्यार्थसिद्धिर्बहुलं सर्वैरङ्गीक्रियत इति भाट्टरहस्यादौ व्यक्तम् ।

ननु द्रव्याद्यभिन्नत्वस्य सप्तविधाभिन्नत्वस्य च यदि पदार्था इत्यत्रान्वयः, तर्हि पदार्थोद्देशेनोभयविधानमिति सिद्ध्यति । विधेयानेकत्वे च वाक्यभेदो दोष इत्याहुः । स इह स्यादिति चेन्न ; न ह्युभयोरेकत्रान्वयमात्रेण वाक्यभेदः । किन्तु विधेयमज्ञाततया ज्ञापनीयं यत्रानेकं तत्र वाक्यभेदः । अत्र तु द्रव्याद्यभेदस्य पदार्थेष्वन्वये तावतैव सप्तविधत्वं ज्ञायत इति सप्तत्वस्यानुवादत्वमिति न दोषः । ननु द्रव्याद्यभेदान्वये द्रव्यत्वादयः सप्त धर्मा इत्येतावत् ज्ञायते । ते विभाजकधर्मा इति न ज्ञायते । अतः सप्तविधत्वमपि विधेयमिति चेत्, सप्तपदस्य सप्तविधेत्यर्थः कथं ज्ञायते, अन्यथाऽपि यत्किञ्चिदबाधितार्थवर्णनसम्भवात् । यदि द्रव्यत्वादीनां विभाजकधर्मत्वौचित्यपर्यालोचनया सोऽर्थो ज्ञायत इत्युच्यते, तर्हि सप्तशब्दार्थनिर्धारणात् प्रागेव तेषां विभाजकधर्मत्वं ज्ञातमिति सप्तविधत्वं न विधेयम् । किं च संख्यावाचिपदनिर्देशं विनापि विभागवाक्यलेखनं बहुलं दृश्यते । तत्र विभाजकधर्मत्वबोधः कथम् ? तत्रोद्देश्यवाचकपदस्यैव तद्विभाजकधर्मवत्पर्यन्तलाक्षणिकत्वादिति चेत् तर्हि सर्वत्र विभाजकवाक्य ऐकरूप्याय पदार्थशब्दस्यैव पदार्थविभाजकधर्मवन्त इत्यर्थोऽस्तु । एवं च सप्तपदं सप्तत्वविशिष्टार्थकमेव । न च तेषामनन्तत्वात् सप्तत्वविशिष्टाभिन्नत्वं बाधितमिति वाच्यम् , पदार्थशब्दार्थैकदेशे विभाजकधर्म एव तदन्वयस्वीकारात् । अथवा 'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामत' इति न्यायेन विभाजकधर्मेषु सप्तत्वे तात्पर्यपर्यवसानसम्भवेनेदृशस्थले

विशिष्टेऽन्वयो न बाधित इति । अथ वा पदार्थां द्रव्याद्यभिन्ना इत्येतावताऽपि विभागपरता वाक्यस्य लभ्यत एव । तथा हि—पर्यायशब्दप्रयोगायोगात् द्वन्द्वादिबलाच्च द्रव्यगुणादीनां परस्परभेदावगमे सति द्रव्यत्वादीनां परस्परासामानाधिकरण्यं प्रतीयते । पदार्थेषु परस्परविभिन्नबहुभेदोक्त्या पदार्थत्वव्याप्यत्वं द्रव्यत्वादौ सिद्ध्यति । पदार्थत्वरूपोद्देश्यतावच्छेदकव्यापकत्वस्य विधेये भानाच्चैषां धर्माणां यावत्त्वं बुद्ध्यत इति समभिव्याहृतपदार्थतावच्छेदकव्याप्यपरस्पराासमानाधिकरणयावद्धर्मवचनरूपविभागपरत्वं सुगमम् । अतः पदार्थपदं न पदार्थविभाजकधर्मवत्परम् । सप्तपदस्य तु सप्तत्वविशिष्टार्थकत्वेऽनन्वयश्चेत् सप्तविधार्थकत्वं काममस्तु । अथापि न तस्य विधेयत्वम्, प्राप्तत्वात् ।

यद्वा सप्तपदमपि सप्तत्वविशिष्टार्थकमेव । द्रव्यत्वविशिष्टगुणत्वविशिष्टाद्यभिन्नपदार्थेषु सप्तत्वविशिष्टाभेदान्वयः । सविशेषणेहीति पूर्वोक्तन्यायेन द्रव्यत्वादीनामेव सप्तत्वे तात्पर्यम् । तथा च यथा 'रामः कृतधनुर्भङ्गः पर्यणैषीद्विदेहजाम्' इत्युक्तौ कृतधनुर्भङ्गस्सन् पर्यणैषीदित्यर्थे सति कृतधनुर्भङ्गत्वविशिष्टमुद्दिश्य परिणयकर्तृत्वविधानेऽपि कृतधनुर्भङ्गत्वस्याप्यर्थाद्विधानम्, तद्वत् पदार्था द्रव्यादयः सन्तस्सप्तेति द्रव्याद्यभिन्नत्वविशिष्टपदार्थोद्देशेन सप्ताभिन्नत्वविधानेऽप्यर्थात्सिद्धवन्निर्देशबलात् द्रव्याद्यभिन्नत्वविधानं भवति । एवञ्च द्रव्याद्यभेदात् सप्त पदार्था इत्यत्रेवात्रापि सप्तत्ववैशिष्ट्यं प्रति द्रव्याद्यभिन्नत्वस्य प्रयोजकत्वमपि लभ्यते । उद्देश्यविधेयभावस्थलेऽसति बाधके विधेयप्रयोजकत्वमुद्देश्यतावच्छेदके लभ्यत इत्यानुभविकं यथा धनवान् सुखीत्यत्र ।

ननु द्रव्यादिपदार्थान्वय एव सप्तशब्दार्थस्य भवतु । तथा च द्रव्यत्वादीनां सप्तत्वं सुग्रहमिति चेत् सत्यम् । अथापि सप्तेति निर्देश-

बलादष्टमः पदार्थो नास्तीति ज्ञापितं भवति । तच्च ज्ञापनं पदार्थशब्दार्थेनान्वय एव स्वरसम् । अतो द्रव्यादिभेदात् सप्त पदार्था इति वाक्य इव तदन्वयो युक्त इति ।

अथ वा द्रव्येत्यादि सप्तपदविशेषणम् । पदार्था इति सप्तपदविशेष्यम् । पदार्थेषु सप्तत्वबाधे सप्तविधा इत्यर्थोऽस्तु । तथा च द्रव्याद्यभिन्नसप्तविधाभिन्नाः पदार्था इति बोधः । वस्तुतस्तु अत्र सप्तत्वं न संख्यारूपम् । गुणादौ तदभावात् । अतोऽपेक्षाबुद्धिविशेषविषयत्वरूपम् । अपेक्षाबुद्धिविशेषश्च द्रव्यमेकं गुण एकः कर्मैकम्—अभाव एक इत्यात्मकः । अत्र चैकत्वस्य स्वाश्रयसमभिव्याहृतपदार्थतावच्छेदकवत्त्वसम्बन्धेन द्रव्यादावन्वयः । एकत्वं च समवाये वक्ष्यमाणम् । तथा चेदृशापेक्षाबुद्धिविशेष्यत्वं द्रव्यादीनामेवास्तीति न तेषु सप्तत्वासम्भवः । एवं च सप्तपदार्थे सप्तत्वविशिष्टे द्रव्यादिपदार्थस्याभेदेनान्वयः, तस्य च पदार्थशब्दार्थ इति पदार्था द्रव्यत्वविशिष्टाद्यभिन्नसप्तत्वविशिष्टाभिन्ना इति बोधः ।

ननु द्रव्यादिसर्वाभिन्नत्वं कस्मिन् पदार्थे सम्भवति । न हि द्रव्ये गुणाद्यभिन्नत्वम् । एवं गुणादावपि न द्रव्याद्यभिन्नत्वम् । अतो द्रव्येत्यादिपदं द्रव्याद्यन्यतमलाक्षणिकमिति चेत् ; क एवमाह एकैकस्य सर्वाभिन्नत्वमिति । किं तु विशेषणविभक्त्यर्थोऽभेदः । स चासाधारणधर्मः । तत्र विभक्त्युपात्तेष्वसाधारणधर्मेषु यस्मिन्नसाधारणधर्मे द्रव्यादिषु मध्ये यस्यान्वयो भवितुमर्हति, तस्यान्वयः । एवमेकैकस्मिन्नसाधारणधर्मे एकैकव्यक्त्यन्वये सति अनन्तरं तस्य तस्यासाधारणधर्मस्य पदार्थशब्दार्थव्यक्तिषु वा सप्तशब्दार्थव्यक्तिषु वा यत्र यत्रान्वय उचितस्तत्र तत्रान्वय इति न कश्चिद्दोषः । यथा घटा नीला इत्युक्तौ विभक्त्यर्थाभेदेष्वसाधारणधर्मेषु

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव । रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराः**

---

यथायोगं तत्तन्नीलव्यक्तीनामन्वये तेषां यथासम्भवं घटव्यक्तिष्वन्वयः । न हि तत्र घटपदस्य घटान्यतमे वा नीलपदस्य नीलान्यतमे वा लक्षणा कैश्चिदुक्तास्ति । तद्वत् । इयानेव भेदः । तत्र विभक्त्यर्थेऽभेदेऽन्वयिनः पदार्था नीलत्वपुरस्कारेणैकेन पदेनोपात्ताः । अत्र तु द्रव्यपदादिना भिन्नभिन्नेनेति । स च भेदोऽकिञ्चित्करः । न खलु धवखदिरावित्यादौ द्वन्द्व ईदृशानुपपत्तिः कुत्रापि प्रदर्शिता । न च द्रव्यादिपदे लक्षणाभावेऽपि सप्तपदेऽन्यतमलक्षणाऽऽवश्यकी सप्तत्वपर्याप्त्यधिकरणधर्मवतः कस्यचिदसम्भवादिति वाच्यम् । सप्तत्वपर्याप्त्युपलक्षितधर्मवत्त्वस्य प्रत्येकं सम्भवेन तत्रापि लक्षणां विनैव निर्वाहादिति ।

तथा च पदार्था द्रव्याद्यभिन्नास्सप्ताभिन्ना इति, द्रव्याद्यभिन्नपदार्थाः सप्ताभिन्ना इति, पदार्था द्रव्याद्यभिन्नसप्ताभिन्ना इति वा बोधः ।

एवं पदार्थसामान्यं विभज्यावान्तरविभागं दर्शयति तत्रेत्यादिना । तच्छब्दार्थो द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः । त्रलो घटकत्वमर्थः । द्रव्याणीत्यत्र गुणादिविभागप्रतिपादकवाक्यस्थगुणादिपदार्थेषु चान्वेति । एवकारोऽन्ययोगव्यवच्छेदार्थः, यथा गोविन्दः पण्डितो भवति विनीतश्च, गोपालस्तु पण्डित एवेत्यादौ । तथा च नवत्वातिरिक्तसंख्यापर्याप्त्यधिकरणविभाजकधर्मशून्यत्वं तदर्थः द्रव्यान्वयि । न चात्मस्थाने परो जीवश्चेति द्वेधा विभज्य दशद्रव्यगणनसम्भवात् कथमीदृशधर्मशून्यत्वमिति वाच्यम् । नवत्वातिरिक्तसंख्यापर्याप्त्यधिकरणभूता ये प्रकृतविभाजकधर्मासमानाधिकरणधर्मसहिता विभाजकधर्मास्तच्छून्यत्वमिति विवक्षितत्वात् । परत्वजीवत्वयोश्च प्रकृतात्मस्वरूपविभाजकधर्मसमानाधिकरणत्वमेवेति । तथा च

**चतुर्विंशतिर्गुणाः । उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि । परमपरं चेति द्विविधं सामान्यम् ।**

नवत्वातिरिक्तसंख्यापर्याप्त्यनधिकरणविभाजकधर्मवत्त्वमेवकारार्थ इति सिद्ध्यति । यद्वा नवत्वपर्याप्त्ययोगव्यवच्छेदस्तदर्थः । अथ वा स्वसमभिव्याहृतपदार्थस्य यत्पदार्थेन सम्बन्धस्तद्व्यापकत्वमेवकारार्थः । अत्र समभिव्याहृतपदं नवपदम् । तदर्थस्य द्रव्यपदार्थेनान्वय इति द्रव्यव्यापकत्वमेवकारार्थः । व्याप्यव्यापकभावस्तादात्म्येन ; नवद्रव्यपदार्थयोस्तादात्म्यात् । व्यापकत्वस्य नवपदार्थेऽन्वयः । तथा च द्रव्यादिनिरूपितघटकताश्रयद्रव्याणि पृथिवीत्वविशिष्टाद्यभिन्नानि द्रव्यव्यापकत्वाश्रयनवत्वविशिष्टाभिन्नानीति रीत्या बोधः ।

**सामान्यमित्यादि** । द्वे विधे यस्य तत् द्विविधम् । विधा विभाजकधर्मः । षष्ठ्यर्थ आधेयत्वं विधायामन्वेति । यन्निरूपिताधेयताश्रयविभाजकधर्मौ द्वित्वविशिष्टाभिन्नाविति विग्रहार्थः । समासे विधापदं लक्षणया द्वित्वविशिष्टविभाजकधर्मवदर्थकम् । द्विपदमीदृशलक्षणातात्पर्यग्राहकम् । तस्याभेदः सामान्ये । चकारार्थः समुच्चयः । स च समुदायः साहित्यम् । तस्य परापरपदार्थयोरन्वयः । इतिशब्दार्थः प्रकारः । तत्र परापरपदार्थयोराधेयतासम्बन्धेन । परापरपदोत्तरविभक्त्योरर्थो नास्ति । प्रकारस्य च सामान्ये आश्रयतासम्बन्धेन । तथा च समुच्चयाश्रयपरापरनिष्ठप्रकारवत् द्वित्वविशिष्टविभाजकधर्मवदभिन्नं सामान्यमिति बोधः । प्रकारश्च तद्वृत्त्यसाधारणधर्म एव परत्वादिः । इतिशब्दस्य हेतुपरत्वे ज्ञानज्ञाप्यत्वमितिशब्दार्थः । परापरपदार्थयोर्विषयतासम्बन्धेन ज्ञानेऽन्वयः । ज्ञाप्यत्वमाश्रयतासम्बन्धेन द्वित्वविशिष्टविभाजकधर्मान्वयि । परमपरं चेति ज्ञाने सति विधाद्वयवत्त्वज्ञानमुत्पद्यत इति भवति विधाद्वयस्य ज्ञाप्यत्वम् । तथा च समुच्चयाश्रयपरापरविषयकज्ञानज्ञाप्यत्वाश्रय द्वित्वविशिष्टविभाजकधर्मवदभिन्नं

**नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव । समवायस्त्वेक एव ।**

सामान्यमिति। नित्येति । नित्यानि द्रव्याणि तेषु वृत्तिर्येषाम् । सप्तम्यर्थो निरूपितत्वम् । वृत्तिराधेयत्वम् । षष्ठ्यर्थ आधेयत्वं वृत्त्यन्वयि । यन्निरूपिताधेयत्वाश्रयाधेयता नित्याभिन्नद्रव्यनिरूपितनिरूपितत्वाश्रय इति विग्रहार्थः । समासे वृत्तिपदस्य नित्यद्रव्यनिरूपिताधेयताश्रये लक्षणा । पूर्वं तात्पर्यग्राहकम् । तुशब्दः पूर्वस्माद्विशेषाणां वैलक्षण्यं वक्ति । अनन्ताः, न अन्तो येषां तेऽनन्ताः । अन्तो नाम परिच्छेदः संख्यावत्त्वं संख्यैव। तस्य पर्याप्तिसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावेऽन्वयः । येषामिति षष्ठ्यर्थाधेयत्वस्य चाभावे । यन्निरूपिताधेयतावद्भावः पर्याप्तिसम्बन्धावच्छिन्नसंख्यानिष्ठप्रतियोगिताक इति विग्रहार्थः । समासेऽन्तपदस्य निरुक्तसंख्याऽभाववति लक्षणा । नञ्पदं तात्पर्यग्राहकम् । तदभेदो विशेषाणाम् । परार्धसंख्याऽपि हि कतिपयमात्रवृत्तिरेव, न पदार्थसामान्ये, न वा विशेषसामान्ये पर्याप्तिसम्बन्धेन वर्तते ।

नन्वनन्तत्वं द्रव्यादीनामप्यस्ति तत्राह एवेति । अयमेवकारः पूर्वं विभागवाक्येषु दर्शितधर्मव्यवच्छेदार्थः । तथा च किंचित्संख्यापर्याप्त्यधिकरणविभाजकधर्मशून्या इति लभ्यते । तथा च द्रव्यादयोऽनन्ताश्च तादृशविभाजकधर्मवन्तश्च । विशेषास्तु केवलमनन्ताः । नैषां तादृशधर्माः सन्तीति । एवं च नित्यद्रव्यनिरूपिताधेयतावदभिन्ना वैलक्षण्याश्रया विशेषाः पर्याप्तिसम्बन्धावच्छिन्नसंख्यानिष्ठप्रतियोगिताकाभाववदभिन्नाः संख्यापर्याप्त्यधिकरणविभाजकधर्मशून्यत्वाश्रया इति बोधः । ननु विशेषो द्विविधः परमाणुवृत्तिविशेषो विभुवृत्तिविशेषश्चेत्येवं विभागः सुकरः इति चेन्न। परमाणुवृत्तिविशेषत्वादेर्विभाजकधर्मत्वं न युक्तम् । अधिकरणानिरूप्यस्यैव धर्मस्य तत्त्वमुचितम् । अयं च धर्मः परमाणुनिरूप्य इत्याशयात् । **समवा-**

**अभावश्चतुर्विधः । प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ॥ तत्र गन्धवती पृथिवी । सा द्विविधा ।**

---

**यस्त्विति** । तुशब्दो वैलक्षण्यार्थः । एकपदमेकत्वविशिष्टार्थकम् । एकत्वं चेदं न संख्यारूपम् , तस्य गुणत्वेन द्रव्यमात्रनिष्ठत्वात् । नापि स्वसजातीयद्वितीयरहितत्वम् । एवकारपौनरुक्त्यप्रसङ्गात् । अतोऽसाधारणधर्मरूपम् । तच्च भेदविशिष्टान्यधर्मवत्त्वम् । वैशिष्ट्यं स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन । स च धर्मस्तद्व्यक्तित्वम् । न च न तस्य भेदविशिष्टान्यत्वम्, तद्व्यक्त्येतद्व्यक्त्युभयभेदं प्रति तद्व्यक्तेः प्रतियोगित्वादनुयोगित्वाच्च तत्तद्वृत्तित्वरूपोभयसम्बन्धेन भेदविशिष्टत्वादिति वाच्यम् , भेदेत्यस्य व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकभेदपरत्वात् । व्यासज्यवृत्तिधर्मो नाम पर्याप्तिसम्बन्धावच्छिन्नाधेयताकधर्मः । उभयत्वादिर्हि पर्याप्तिसम्बन्धेनोभयादौ वर्तत इति । अथ वा धर्मविशिष्टान्यधर्मवत्त्वमेकत्वम् । वैशिष्ट्यं स्वसामानाधिकरण्य, स्वावच्छिन्नप्रतियोगिताकस्वाश्रयावृत्तिभेदसामानाधिकरण्योभयसम्बन्धेन । अत्र धर्मपदेन तद्व्यक्तित्वरूपधर्मग्रहणेऽनेकवृत्तिधर्मस्य सर्वस्य धर्मविशिष्टत्वमेव । स्वपदेनोभयत्वादिग्रहणेन तद्विशिष्टत्वं तद्व्यक्तित्वसमवायत्वादौ न सुवचम् । तदवच्छिन्नभेदस्य तदाश्रयवृत्तित्वादिति । ननु द्रव्यादीनामपीदृशैकत्वमस्तीति किं वैलक्षण्यं तत्राह **एवेति** । अस्यैकत्वातिरिक्तसंख्यापर्याप्त्यधिकरणत्वाभावोऽर्थः समवायान्वयी । संख्या चेयमपेक्षाबुद्धिविशेषविषयत्वात्मकद्वित्वादिरूपा । तथा च समवायो वैलक्षण्याश्रय एकत्वविशिष्टाभिन्न एकत्वातिरिक्तसंख्यापर्याप्त्यधिकरणत्वाभाववानिति बोधः । यद्वा पूर्ववद्व्यापकत्वमेवकारार्थः । व्याप्यव्यापकभावस्तादात्म्येन । समवायव्यापकत्वाश्रय एक इत्यर्थः । एकत्वविशिष्टस्य कस्यचिदपि हि न घटादिव्यापकत्वम् । भवति तु समवायव्यापकत्वमिति वैलक्षण्यम् । **अभाव इत्यादि** । सामान्यविभागवाक्य इव बोधप्रकारः ।

**नित्याऽनित्या च । नित्या परमाणुरूपा । अनित्या कार्यरूपा ।**

---

एवमवान्तरविभागमपि विधाय विभक्तान् प्रत्येकं निरूपयति **तत्रे**त्या-दिना कृत्स्नेन ग्रन्थेन । तत्रशब्दः सर्वलक्षणवाक्यस्थलक्ष्यवाचकपदान्वयी । पृथिव्याद्यन्योन्याभावान्तास्तदर्थाः । घटकत्वं त्रलर्थः । मतुप् अधिकरण-तावदर्थकः । अधिकरणतायां गन्धस्य निरूपितत्वसम्बन्धेनान्वयः । पृथि-व्यादिनिरूपितघटकताश्रयपृथिवी गन्धनिरूपिताधिकरणतावदभिन्नेति बोधः। गन्धोऽस्य अस्तीति विग्रहे इदंशब्दार्थः पृथिवी, षष्ठ्यर्थो निरूपितत्वम्, स धात्वर्थाधेयत्वान्वयि, अस्तीति तिबाख्यातार्थे आश्रयत्वमाश्रयतासम्बन्धेन गन्धे अन्वेति, तथा च पृथिवीनिरूपितनिरूपित्वाश्रयाधेयतानिरूपिताश्रयता-वान् गन्ध इति बोधः । गन्धवत्त्वं पृथिव्या लक्षणम् । लक्ष्या पृथिवी-लक्ष्यतादिस्तत्तन्निष्ठो धर्मः । अत्र कालिकसम्बन्धेन गन्धवत्त्वं कालेऽस्ती-त्यतिव्याप्तिः । तद्वारणाय समवायेन गन्धवत्त्वं लक्षणम् । न च गन्ध-वत्त्वं गन्धनिष्ठाधेयतानिरूपिताधिकरणतावत्त्वम् , समवायेनेति तृतीयार्थोऽ वच्छिन्नत्वमाधेयतान्वायि । पृथिव्यां समवायेन गन्ध आधेयो भवतीति साऽऽधेयता तत्सम्बन्धावच्छिन्ना । तथा च समवायसम्बन्धावच्छिन्नगन्ध-निष्ठाधेयतानिरूपिताधिकरणतावत्त्वं लक्षणं पर्यवसितम् । एवं च काले ऽतिव्याप्तिस्तदवस्था । पृथिव्यां स्वरूपसम्वन्धेन प्रसिद्धायास्तादृशाधिकरण-तायाः कालेऽपि कालिकसम्बन्धेन सत्त्वादिति वाच्यम् ; गन्धो लक्षणम् । न तु गन्धवत्त्वम् । समवायस्तु लक्षणतावच्छेदकसम्बन्ध इत्यदोषात् । एवमुत्तरत्र । नित्येति । सेत्यनुषज्यते । एवमग्रेऽपि । **परमा-णुरूपे**ति । रूपं स्वरूपम्, असाधरणधर्मवत् । परमाणुरूपं यस्याः सा । षष्ठ्यर्थ आधेयत्वमसाधारणधर्मेऽन्वेति । तथा च यन्निरूपिताधेयता-वदसाधारणधर्मवत् परमाणु इत्यर्थः । रूपमित्यस्यासाधारणधर्म इत्यर्थे

**पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् । इन्द्रि-**

परमाणो रूपं यस्या इति विग्रहः । षष्ठ्यर्थ आधेयत्वं । उभयथाऽपि समासे रूपपदं पृथिवीपरमाणुत्वविशिष्टेत्यर्थलाक्षणिकम् । तदभिन्ना नित्याभिन्नपृथिवीति बोधः । एवमुत्तरत्र । पृथिव्यादिचतुष्टयं प्रत्येकं द्वेधा विभज्यते । प्रथमः प्रकारो जगदुपादानकारणविवेकोपयोगी । द्वितीय आत्मनो भोगसम्पादकत्वप्रकारविज्ञानोपयोगी । तत् प्रथमां विधामुक्त्वा द्वितीयामाह **पुन**रिति । अस्यार्थः समुच्चयः । त्रिविधेत्यत्र विधाशब्दस्य हि त्रित्वविशिष्टविभाजकधर्मवतीत्यर्थे लक्षणा । तत्र धर्मे समुच्चयस्याश्रयतासम्बन्धेनान्वयः । अयं च समुच्चयः पूर्वोक्तद्वित्वविशिष्टविभाजकधर्मप्रतियोगिकः । सेत्यनुषज्यते । शरीरेन्द्रियविषयाणां भेदस्तस्मात् । भेदो भेदकोऽसाधारणधर्मः । विग्रहे षष्ठ्यर्थ आधेयत्वम् । समासे विषयपदं पार्थिवशरीरेन्द्रियविषयनिष्ठेत्यर्थकम् । अभेदसम्बन्धेन तस्य भेदेऽन्वयः । ज्ञानज्ञाप्यत्वं पञ्चम्यर्थः । भेदस्य ज्ञाने विषयतासम्बन्धेनान्वयः । प्रयोज्यत्वं वा पञ्चम्यर्थः, त्रिविधापदार्थैकदेशे त्रित्वविशिष्टविभाजकधर्मवैशिष्ट्येऽन्वेति । सम्बन्धस्य हि सम्बन्धिप्रयोज्यत्वमनुभवसिद्धमिति वैशिष्ट्यस्य भेदरूपधर्मप्रयोज्यत्वमक्षतम् । इत्थमेव पूर्वमितिशब्दघटितविभागवाक्येष्वपीतिशब्दार्थस्य प्रकारस्य प्रयोज्यतासम्बन्धेन द्विविधेतिपदार्थैकदेशे धर्मवैशिष्ट्येऽन्वय इति सुवचम् । प्रायशः पदेषु लक्षणामङ्गीकृत्य बोधनिर्वाहस्तु तैस्तैः क्रियमाणो यावद्बलमुपेक्षणीय इत्येतावत्यस्माकं निर्भरः । पार्थिवशरीरादिकं दर्शयति शरीरमित्यादिना । अस्मदादीनामिति । वयमादयो येषां ते । अस्मच्छब्दः शब्दप्रयोक्तृपुरुषवाची । अत्र चायमन्नम्भट्टोऽस्मत्पदार्थः । यद्वाऽहं च यूयं चेति विग्रहेऽस्मच्छब्दश्शब्दप्रयोक्त्रन्नम्भट्ट, तद्बुद्धिस्थशिष्यतदीयप्रकृतग्रन्थपाठितृबालादिपरः । आ-

दिशब्दः प्रथमार्थकः । अत्र चोपस्थितिमादाय प्राथम्यं वक्तव्यम् । अतः पदार्थविशेषापेक्षया प्रथमोपस्थितत्वं प्राथम्यम् । तथा च पदार्थविशेषविषयकोपस्थितिविशेषानुत्तरोपस्थितिविषय इत्यादिशब्दार्थः । पदार्थविशेषेत्यनेन स्वसमानाधिकरणपदोपस्थाप्यार्थभिन्ना अर्था गृह्यन्ते । उपस्थितिविशेषेत्यनेन च स्वघटितवाक्यार्थसम्बन्धित्वप्रकारिका प्रकृतवाक्याधीनोपस्थितिः । अयं भावः—भूतले घटादिरस्तीत्यादिशब्दघटितवाक्यप्रयोगे आदिशब्दसमानाधिकरणं यद्घटपदम्, तदर्थ एव प्रकृतवाक्यार्थभूतलास्तित्वसम्बन्धोपस्थितिः पूर्वं भवति । तद्भिन्नपटादौ विशिष्य तत्सम्बन्धज्ञानं च तादृशवाक्याज्झटिति न भवति । अपि त्वादिशब्दग्राह्यः पटादिरेव स्यादिति योग्यतालोचनया विलम्बेन । एवं चादिशब्दप्रयोग एवमनुभवादादिशब्दस्यायमेवार्थो भवितुमर्हति । यदि तु पटादिरिति प्रयुज्यते तदा पट एव समभिव्याहृतपदार्थसम्बन्धप्रतीतिः प्रागिति स एवादिः । अत्र च विग्रहे येषामिति षष्ठ्यर्थो घटकत्वम् । तस्यादिशब्दार्थघटके पदार्थविशेषे, उपस्थितीविषय इत्यत्र विषये चान्वयः । अथ वेद्दशस्थलेष्वादिशब्दप्रयोगनिबन्धनमात्रमेतत् । आदिशब्दस्य तु वस्तुनिष्ठभेदप्रतियोगीत्यर्थः । येषामिति षष्ठ्यर्थघटकत्वं वस्तुषु प्रतियोगित्वे चान्वेति । तथा च यद्घटकत्वाश्रय, यद्घटकवस्तुनिष्ठभेदप्रतियोग्यभिन्नावयवमिति विग्रहार्थः । समासे आदिपदमस्मत्तद्भिन्नरूपार्थलाक्षणिकम् । क्वचिदादिप्रभृतिशब्दाः प्रकारवचना अपि भवन्ति । प्रकारः साजात्यम् । तद्ग्रहणे तु वयं सजातीया येषामित्यर्थः । साजात्यं च पार्थिवलोकवासित्वम् । तदा समास आदिपदमस्मन्निष्ठपार्थिवलोकवासित्वाश्रयलाक्षणिकम् । षष्ठ्यर्थः सम्बन्धः सुखावच्छेदकत्वरूपः । सुख आधेयतासम्बन्धेनाद्यर्थान्वयः । अवच्छेदकत्वस्याश्रयतासम्बन्धेन शरीरे । केवलावच्छेदकत्वं न सम्बन्धः ; आ-

**थं गन्धग्राहकं घ्राणं नासाग्रवर्ति । विषयो मृत्पाषाणादिः ।**

**शीतस्पर्शवत्य आपः । ता द्विविधाः । नित्या अनित्याश्च । नित्याः परमाणुरूपाः । अनित्याः कार्यरूपाः । पुनस्त्रिविधाः श-**

---

स्मनो विभुत्वेनास्मदाद्यात्मानं प्रति जलीयशरीरादेरप्यवच्छेदकत्वात् । गन्धेति । गन्धस्य ग्राहकम् । षष्ठ्या विषयित्वं ग्रहधातोर्ज्ञानं ण्वुलो जनकतावदिति चार्थः । विषयिताया ज्ञानेऽन्वयः, ज्ञानस्य च जनकतायां निरूपितत्वसम्बन्धेन । समासे गन्धपदं गन्धविषयके लाक्षणिकम् । अभेदेन ज्ञाने तदन्वयः । पार्थिवेन्द्रियं गन्धग्राहकाभिन्नं घ्राणाभिन्नमिति बोधः । शरीरे घ्राणेन्द्रियस्थानं दर्शयति तच्चेति । तत् पार्थिवेन्द्रियम् । चकारार्थः समुच्चयो नासाग्रवर्तित्वान्वयी । गन्धग्राहकत्वादिना नासाग्रवर्तित्वस्य समुच्चयः । नासाया अग्रं तस्मिन् वर्तत इति । षष्ठ्याः समवायित्वम्, सप्तम्या निरूपितत्वम् । वृतुधातोराधेयत्वं चार्थः । समासे अग्रपदस्य नासाग्रनिरूपिते लक्षणा । अभेदेन धात्वर्थे तदन्वयः । यदि पुनर्नासापदस्य नासासमवायिनि लक्षणा , तस्याभेदेनाग्रेऽन्वय इत्युच्यते , तदाऽग्रपदस्य धात्वर्थेऽन्वयार्थमग्रनिरूपितेति लक्षणाया आवश्यकतया तदेकदेशेऽग्रेऽन्वयो वाच्यः । एवमेकदेशान्वयक्लेशो मा भूदिति अग्रपद एव लक्षणा , नासापदं तात्पर्यग्राहकमिति स्वीक्रियते । णिनिप्रत्ययार्थोऽधिकरणतावान् । अधिकरणतायां धात्वर्थो निरूपितत्वसम्बन्धेनान्वेति । समुच्चयाश्रय, तादृशाधिकरणतावदभिन्नं पार्थिवेन्द्रियमिति बोधः । मृदिति । आदिपदं मृत्पाषाणतद्भिन्नार्थलाक्षणिकम् ।

शीतेति । उष्णादिस्पर्शवति तेजआदावतिव्याप्तिवारणाय शीतेति । स्पर्शेत्यनुक्तौ यद्यपि न कश्चिद्दोषः , अथापि शीतपदस्य गुणिन्यपि प्रयोगाच्छीतलमादाय, तद्भुत्वं पृथिव्यादेरपीत्यतिव्याप्तिशङ्का स्यादिति तत्पदं प्रयुक्तम् । समवायेन शीतं लक्षणमिति ध्येयम् । ताश्चेति चकारः

**रीरेन्द्रियविषयभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिः ।**

**उष्णस्पर्शवत्तेजः । तच्च द्विविधम् । नित्यमनित्यं च । नित्यं परमाणुरूपम् । अनित्यं कार्यरूपम् । पुनस्त्रिविधम् । शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके । इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयश्चतुर्विधो भौमदिव्योदर्याकरजभे-**

---

पृथिवीसमुच्चये । तच्छब्दार्थे तदन्वयः । यथा पृथिवी द्विविधा तथाऽऽपोपीति । **वरुणलोक** इति । वरुणशब्दस्य वरुणस्वामिके लक्षणा । अभेदेन लोके तदन्वयः । सप्तम्यर्थं आधेयत्वं शरीरान्वयि । **रसन**मिति । इदं च सर्वेषाम् । **कृष्णे**ति । कृष्णा तारा । अग्रपदं कृष्णतारासमवाय्यग्रनिरूपितार्थलाक्षणिकमित्यादि पूर्ववत् । पार्थिवादिविषयेऽवान्तरविभागप्रदर्शनमशक्यमासीत् । तैजसे तु तच्छक्यमस्तीति विभजते **विषय** इति । भूमौ भवं भौमम् । दिवि भवं दिव्यम् । उदरे भवं उदर्यम् । आकरे जायत इत्याकरजम् । सप्तम्यर्थोऽवच्छिन्नत्वम् । भूदेशाद्यवच्छेदेन तेजो जायत इति । भौमेत्यादौ प्रत्ययार्थो जन्यतावदिति । जन्यतायां भूम्यादेरवच्छिन्नत्वसम्बन्धेनान्वयः । आकरशब्दः खन्यवच्छिन्ने लाक्षणिकः, तदभेदो जेत्यत्र जनिधात्वर्थजन्यतायाम् । ननु नित्यानित्यसाधारण्येन पुनस्त्रिविधमिति तेजोविभागमारभ्य शरीरेन्द्रियविषयभेदादित्युक्त्या शरीरेन्द्रिययोः कार्यतेजस्त्वावश्यम्भावाच्च विषयपदेन शरीरेन्द्रियभिन्नं कार्यतेजो नित्यतेजश्च ग्राह्यमिति निश्चीयते । एवं च भौमादिविभागस्य कार्यमात्रविषयकतया कथं सामान्यतो विषयश्चतुर्विध इत्युच्यते? सत्यम्; नित्यानित्यविभागप्रदर्शनेन शरीरेन्द्रिययोः कार्यतया च पृथिव्यादाविव तेजस्यापि विषयो नित्यानित्यभेदेन द्विविध इति ज्ञातप्रायमेव । कार्यविषय एव किञ्चिद्ज्ञापनीयमस्तीत्यभिप्रेत्य विषयश्चतुर्विध इत्युक्तम् । अत इह विषयशब्दः कार्यतैजसविषयपर इति । न च भौमेत्यादौ भूमिस-

**दात् । भौमं वह्न्यादि । अबिन्धनं दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् । आकरजं सुवर्णादि ।**

**रूपरहितस्पर्शवान् वायुः । स द्विविधः । नित्योऽनित्यश्च ।**

---

म्बन्धीत्याद्यर्थाविवक्षणाज्जन्यत्वरूपार्थाविवक्षणाच्च परमाणूनामपि ग्रहणं भवतीति वाच्यम् , आकरजेति जनिधातुप्रयोगेण सर्वत्र जन्यत्वस्यैव स्वरसग्राह्यत्वात् । परमाणावबिन्धनत्वाद्यसम्भवाच्च । परमाणूनां सर्वत्र सञ्चारितया एषां भौमत्वमेषां दिव्यत्वमित्येवं व्यवस्थायाः कर्तुमशक्यत्वाच्च । अतः पूर्वोक्त एवाक्लिष्टः परिहारः । अबिन्धनं अब्भिरिन्धनं प्रकाशो यस्य । तृतीयार्थो जन्यत्वम् । षष्ठ्यर्थ आधेयत्वम् । समानाधिकरणबहुव्रीहिरेव वा । इन्धनपदस्याब्जन्यप्रकाशविशिष्टे लक्षणा । आदिनोल्कादिग्रहणम् । भुक्तस्येति । भोजनं गलाधोनयनम् । क्तप्रत्ययस्य कर्मतावदित्यर्थः । तत्र कर्मतायां निरूपितत्वसम्बन्धेन नयनान्वयः । परिणामः समवायिकारणतानिरूपक(कार्य)द्रव्यम् । तस्य हेतुः जनकतावत् । भुक्तस्येति षष्ठ्यर्थः सम्बन्धः समवायिकारणतान्वयी । स च क्वचित् साक्षात् सम्बन्धः , यथा कपालस्य परिणामो घट इति । क्वचित् परम्परया तदवयवद्वारा , यथा दुग्धस्य परिणामो दधीति । परिणामशब्दस्य समासे परिणामनिरूपिते लक्षणा । तथा च गलाधोनयननिरूपितकर्मताश्रयवस्तुनिरूपितसम्बन्धवत्समवायिकारणतानिरूपकद्रव्यनिरूपितजनकतावत् उदरावच्छिन्नजन्यतावत्तेज इति । वायुं लक्षयति रूपेति । रह धात्वर्थोऽभावः । तृतीयार्थोऽनुयोगित्वम् । रूपाभावस्य हि रूपं प्रतियोगि, अभावोऽनुयोगी । समासे रूपशब्दस्य रूपानुयोगिनि लक्षणा । क्तप्रत्ययार्थ आश्रयतावान् । आश्रयतायामभावस्य निरूपितत्वसम्बन्धेनान्वयः । स्पर्शवानिति मतुबर्थोऽप्याश्रयतावान् । स्पर्शवति रूपरहितस्याभेदेनान्वयः । रूपानुयोग्यभिन्नाभावनिरू-

**नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । पुनस्त्रिविधः । शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनहेतुर्वायुः । शरीरान्तःसञ्चारी**

---

पिताश्रयतावदभिन्नस्पर्शनिरूपिताश्रयतावदभिन्नो वायुरिति बोधः । रूपाभावविशिष्टस्पर्शः समवायेन लक्षणम् । वैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन । कालेऽपि कालिकसम्बन्धेन विशिष्टस्पर्शसत्त्वादतिव्याप्तिरिति समवायेनेति । ननु पृथिव्यामतिव्याप्तिः, रूपाभावस्य कालिकसम्बन्धेन तत्र सत्त्वात्स्पर्शस्य च समवायेन सत्त्वात्तत्रोभयोः सामानाधिकरण्यात् । न च सामानाधिकरण्यं नामधेयतानिरूपिताधिकरणतावन्निष्ठाधिकरणतानिरूपिताधेयता । तत्र प्रथमाधेयतायां स्वरूपसम्बन्धावच्छिन्नत्वं निवेश्यते । तथा च पृथिव्यां रूपाभावस्य कालिकसम्बन्धेन सत्त्वेऽपि स्वरूपसम्बन्धेनाभावान्न पृथिव्यां सामानाधिकरण्यमिति वाच्यम् । तन्निवेशेऽप्यतिव्याप्तेः, स्वरूपसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणता हि वायौ प्रसिद्धा । सा कालिकसम्बन्धेन पृथिव्यामस्ति । अतस्तादृशाधिकरणतावती पृथिवी । तन्निष्ठाधिकरणतानिरूपिताधेयता च स्पर्श इति सामानाधिकरण्यस्याक्षतत्वादिति चेन्न । वस्तुतो रूपाभावस्य स्वरूपसम्बन्धेन यदधिकरणं वस्तुतस्तादृशाधिकरणनिरूपिता याऽऽधेयता तदेव प्रकृते सामानाधिकरण्यमिति तेन सम्बन्धेन रूपाभावविशिष्टस्पर्शो लक्षणमिति विवक्षणीयम् । अतो न दोषः । सर्वशरीरवर्तीति । शरीरपदं शरीरावयवपरम् । सर्वेषु शरीरेषु शरीरावयवेषु वर्तत इति विग्रहः । अवच्छिन्नत्वं सप्तम्यर्थः । सर्वशरीरावयवावच्छिन्नेति शरीरपदे लक्षणा । अभेदेन वृतुधात्वर्थ आधेयत्वेऽन्वयः । आश्रयोणिन्यर्थः । वायवीयविषयमाह विषय इत्यादिना प्राणश्चेत्यन्तेन वाक्येन । प्रशस्तपादभाष्ये 'चतुर्विधः शरीरमिन्द्रियं विषयः प्राणः' इति चातुर्विध्य-

**वायुः प्राणश्च । स चैकोऽप्युपाधिभेदात् प्राणापानादिसंज्ञां लभते ।**

मुक्तम् । इह त्रैविध्योक्तौ तद्विरोध इति शङ्काप्रसक्त्यभावाय शरीरान्तःसञ्चारी वायुः प्राणश्चेति विशिष्योक्तम् । तथा च वृक्षादिकम्पनहेतुर्वायुः प्राणश्चेत्युभयमपि विषय एवेत्यर्थः । शरीरेन्द्रियभिन्नत्वमेव विषयत्वमिति प्राणोऽपि विषय एव । भाष्ये पृथगुक्तिस्तु बाह्यवायुविलक्षणकार्यकरत्वप्रदर्शनाभिप्रायेणोपकारातिशयादरेणेति भावः । वृक्षादीनां कम्पनं तस्य हेतुर्जनकतावान् । प्रथमषष्ठ्यर्थ आधेयत्वम्, द्वितीयतदर्थो निरूपितत्वम् । कम्पनपदस्य वृक्षतद्भिन्ननिष्ठक्रियानिरूपितेति लक्ष्यार्थः । जनकतायामभेदेनान्वयी । **शरीरेति** । अन्तःशब्दोऽन्तरवयवपरः । शरीरस्य समवायित्वसम्बन्धेन तत्रान्वयः । अन्तरवयवस्यावच्छिन्नत्वसम्बन्धेन संपूर्वकचरधात्वर्थे क्रियायामन्वयः । णिनेरर्थ आश्रयतावान् । आश्रयतायां धात्वर्थस्यान्वयः । णिन्यर्थस्य वायौ, तस्य प्राणे, तस्य प्रथमवायुपदार्थस्य च विषयेऽभेदेन; चार्थसमुच्चयस्य प्रथमवायुपदार्थे प्राणे च । ननु शरीरान्तःसञ्चारी वायुः प्राण एवेति कथम्? अपानादेरपि सत्त्वादिति शङ्कायामाह **स चेति** । सः शरीरान्तःसञ्चारी वायुः । चो वाक्यालङ्कारे, ज्ञातत्वप्रसिद्धिद्योतनार्थो वा, प्रकृतवाक्यार्थस्य पूर्ववाक्यार्थसमुच्चये वा । **एकः** एकशरीरावच्छेदेनैकदा स्वसमानद्वितीयरहितः । स्वाश्रयशरीरावच्छिन्नत्व,स्वसमानकालिकत्व,स्वभिन्नत्वरूपसम्बन्धत्रयेण वायुविशिष्टान्यः । अपेरविरोधित्वमर्थः तच्च सामानाधिकरण्यम् । तस्य लभधात्वर्थेऽन्वयः । एकपदार्थस्य निरूपितत्वसम्बन्धेन सामानाधिकरण्ये । अभेदेनैकपदार्थो वायौ, तत्र लाभोऽप्यस्तीति तयोस्सामानाधिकरण्यम् । **उपाधिभेदात्**, उपाधीनां निमित्तानां शक्यतावच्छेदकानां भेदात् परस्परं भिन्नत्वात् । आधेयत्वं षष्ठ्यर्थः । 'हृदि प्राणो गुदेऽपानस्समानो नाभिसंस्थितः । उदा-

**शब्दगुणकमाकाशम् । तच्चैकं विभु नित्यं च ।**

---

नः कण्ठदेशस्थो व्यानस्सर्वशरीरगः' इत्युक्तरीत्या प्राणादिशब्दा हृदयादितत्तद्देशावच्छिन्नवायुवाचिन इति तत्र तत्र शक्यतावच्छेदकभेदः । अथवा क्रियाभेदादिति भाष्ये दर्शनात् प्राणादिशब्दाः प्राणनापाननव्याननोदननसमननरूपक्रियाविशिष्टवाचिनः । तत्तत्क्रिया च भिन्नेति भावः । विवृतं चेदं **कन्दल्याम्**, 'मूत्रपुरीषयोरधोनयनादपानः, रसस्य गर्भनाडीवितनन्नाद्व्यानः , अन्नपानादेरूर्ध्वं नयनादुदानः , मुखनासिकाभ्यां निष्क्रमणात् प्राणः, आहारेषु पाकार्थमुदर्यस्य वह्नेस्समं सर्वत्र नयनात् समान' इति । भेदादिति पञ्चम्यर्थः प्रयोज्यत्वं लाभेऽन्वेति । प्राणापानावादी यस्यास्सा । प्राणापानशब्दौ तत्तच्छब्दपरौ, संज्ञापदसामानाधिकरण्यात् । आदिपदं प्राणशब्दापानशब्दतद्भिन्नशब्दपरम् । तदभिन्ना संज्ञा वाचकशब्दः प्राणशब्दापानशब्दतद्भिन्नशब्दाभिन्नविभिन्नार्थवाचकशब्दमिति यावत् । विभिन्नार्थेति निवेशाभावे विरोधप्रसक्तिरेव नास्ति । एकस्यैव घटस्य घटकुम्भकलशादिबहुसंज्ञालाभदर्शनात् । लभते प्राप्नोति । प्राप्तिः सम्बन्धः तच्च वाच्यत्वम् । संज्ञामित्येकत्वमविवक्षितम् । द्वितीयार्थो निरूपितत्वं वाच्यत्वरूपसम्बन्धान्वयी । तथा च तत्समभिव्याहृतलभधातुना प्राणशब्दादितत्तच्छब्दवाच्यत्वानि सर्वाण्युच्यन्ते । तेषु सर्वेष्वपि शब्दार्थसामानाधिकरण्यान्वयादेकस्यैव सर्वपदवाच्यत्वावगतिः । आश्रयत्वमाख्यातार्थस्स इत्यत्रान्वेति ।

आकाशं लक्षयति शब्देति । शब्दो गुणो यस्य । षष्ठ्यर्थः समवेतत्वम् । यन्निरूपितसमवेतत्वाश्रयगुणः शब्दाभिन्नः । शब्दसमवायीति गुणपदे लक्षणा । कालिकसम्बन्धेन शब्दवति कालेऽतिव्याप्तिरिति समवायेति । गुणेति न लक्षणप्रविष्टम् । तदुक्तिस्तु शब्दस्य गुणत्वात्

**अतीतादिव्यवहारहेतुः कालः, सचैको विभुर्नित्यश्च ।**

द्रव्यत्वाभावात् किञ्चिदाश्रितत्वस्यावश्यकत्वादाकाशसिद्धिरिति सूचनाय । तथा च समवायेन शब्दो लक्षणम् । पृथिव्यादाविवात्र विभागो नास्तीत्याह तच्चेति । चकारः पृथिव्यादिवैलक्षण्यार्थस्तुपर्यायः । एकम् एकत्वातिरिक्तसंख्यापर्याप्त्यधिकरणतानवच्छेदकसमभिव्याहृतपदार्थतावच्छेदकत्व - दिति यावत् । नन्वाकाशस्यैकत्वे तस्य काञ्च्यां सत्त्वे कावेरीपरिसरे शब्दो नोत्पद्येत कारणाभावात्तत्राह विभ्विति । सर्वव्यापि, सर्वसम्बन्धीत्यर्थः । रूपादिसम्बन्ध आकाशे बाधित इति सर्वद्रव्यसम्बन्धीति वक्तव्यम् ; विभुनो विभुना न सम्बन्ध इत्यसम्भवात्सर्वमूर्तद्रव्यसम्बन्धीति ; ज्ञानमपि विषयतया तावत्सम्बन्धीत्यतिव्याप्त्या सर्वमूर्तद्रव्यसंयोगीति । तच्च न तत्तन्मूर्तद्रव्यं विशिष्य गृहीत्वा तन्मूर्तसंयोगित्वे सत्येतन्मूर्तसंयोगित्वे सतीत्येवम् । तथा सर्वग्रहणस्याशक्यत्वात् । अतो मूर्तत्वव्यापकसंयोगाश्रयत्वं विभुत्वम् । तत्रापि संयोगित्यनेनैकैकसंयोगग्रहणे न कस्यापि मूर्तत्वव्यापकत्वम् , घटाकाशसंयोगादेः पटादावभावादिति संयोगसम्बन्धेन मूर्तत्वव्यापकत्वं तदिति निष्कर्षः । आकाशस्यैकत्वे यदा तस्य नाशस्तदुत्तरं कथं शब्दोत्पत्तिस्तत्राह नित्यमिति । प्रागभावाप्रतियोगित्वध्वंसाप्रतियोगित्वोभयवदित्यर्थः । चार्थः समुच्चय एकत्वविभुत्वनित्यत्वेष्वन्वेति ।

अतीतेति । अतीतशब्दोऽतीतघटादिवस्तुपरः । अतीत आदिर्येषां ते । आदिशब्दोऽतीतभिन्नवस्तुपरः । तेषां व्यवहारो ज्ञानजनकशब्दप्रयोगः । षष्ठ्यर्थो विषयित्वं ज्ञानेऽन्वेति । समासे आदिपदमतीतभिन्नवस्तुविषयकपरम् । अभेदेन ज्ञाने तदन्वयः । व्यवहारपदस्य ज्ञानजनकशब्दप्रयोगनिरूपिते लक्षणा । हेतुः कारणतावान् । एकदेशे कारणतायामभेदेन तदन्वयः । अतीतादिवस्तुविषयकाभिन्नज्ञानज-

नकशब्दप्रयोगनिरूपिताभिन्नकारणतावदभिन्न इति बोधः । यद्वा अतीत इत्यादिर्येषां ते । इतिशब्दः प्रकारवाची सा चेहानुपूर्वी । व्यवहारः प्रयोगः । यदीयादिभूतो व्यवहारोऽतीतशब्दवृत्त्यानुपूर्व्यवच्छिन्नविषयक इति विग्रहार्थः । समासे आदिपदमतीततद्भिन्नशब्दविषयकपरम् । भिन्नश्च शब्दोऽनागतादिः । अतीतादयो व्यवहारास्तेषां हेतुरित्यादिपूर्ववत् । अतोऽतीततद्भिन्नशब्दविषयकव्यवहारनिरूपिताभिन्नकारणतावानिति बोधः । अतीतादिव्यवहारो हि कालस्यैव व्यवहारः । तत्र कालः कारणम् । व्यवहर्तव्याभावे व्यवहारासम्भवादिति । ननु व्यवहर्तव्यज्ञानमेव कारणम् । न तु व्यवहर्तव्यम् । अतः कारणत्वं कालज्ञानस्यैव, न तु कालस्येत्यसम्भवः । न च कालस्य सर्वकारणत्वान्नासम्भव इति वाच्यम् । ईदृशकारणत्वस्यादृष्टेश्वरयोरपि सत्त्वादतिव्याप्तिरिति चेत् हेतुपदं जनकज्ञानविषयपरम् । कालज्ञानस्य तादृशव्यवहारासाधारणजनकत्वात्कालस्य तादृशज्ञानविषयत्वमस्तीति न दोषः ।

ननु जनकज्ञानेत्यनेन,'अतीतः भूतलं च घटवदि'ति समूहालम्बनज्ञानस्यापि ग्रहणसम्भवात्तद्विषयत्वं भूतलादावित्यतिव्याप्तिरिति चेन्न जनकज्ञानविषयेत्यस्य जनकतावच्छेदकविषयतावानित्यर्थः । नियमेन यद्विषयकज्ञानं जनकम् तन्निष्ठविषयतैव जनकतावच्छेदिकेत्यदोषात् । ननु वर्तमानेत्यस्य शब्दप्रयोगाधिकरणकालेत्यर्थः । अतीतेत्यस्य तादृशकालवृत्तिध्वंसप्रतियोगीति । अनागतेत्यस्य तादृशकालवृत्तिप्रागभावप्रतियोगीति । तथा चातीतादिशब्दप्रयोगजनकज्ञानं शब्दप्रयोगाधिकरणकालवृत्तिध्वंसप्रतियोगीत्यादिरूपम् । तादृशज्ञानविषयत्वं च यथा काले तथा कालवृत्तित्वे ध्वंसे प्रागभावे प्रतियोगिनि चेति तत्र सर्वत्रातिव्याप्तिः । न च जनकज्ञानविषयत्वं नाम जनकतावच्छेदकविशेष्यता-

निरूपितविषयतानिरूपितविषयतानिरूपितविषयतानिरूपितविपयताश्रयत्वम् । विशेष्यता प्रतियोगिघटादिनिष्ठा, तन्निरूपितविषयता प्रतियोगित्वनिष्ठा । तन्निरूपितविषयता ध्वंसप्रागभावनिष्ठा, तन्निरूपितविषयता आधेयताऽव्यवृत्तिनिष्ठा, तन्निरूपितविषयता काल एव । वर्तमानव्यवहारहेतुत्वं च जनकतावच्छेदकविशेष्यतानिरूपितविषयतानिरूपितविषयताश्रयत्वमेव । शब्दप्रयोगाधिकरणकालवृत्तीत्यर्थे कालवृत्तिघटादिनिष्ठा विशेष्यता तन्निरूपितविपयता वृत्तिनिष्ठा, तन्निरूपितविषयता काल एवेति । सर्वं पृथग्लक्षणम् । अतो न दोष इति वाच्यम् । शब्दप्रयोगं प्रति यथा अर्थज्ञानं कारणम् तथा शब्दज्ञानमपि । एवमध्ययनकाले शिष्यीयशब्दप्रयोगं प्रति गुरुप्रयुक्तशब्दज्ञानं कारणं दृष्टमेव । तस्मादिदं लक्षणमतीतेत्यादिशब्दान्तर्गतवर्णेऽपि भविष्यतीत्यतिव्याप्तिरिति चेन्न ; तादृशजनकतावच्छेदकप्रकारताश्रयाधेयतानिरूपकत्वं लक्षणम् । तत्र तत्र शब्दप्रयोगाधिकरणकालवृत्तीत्यत्र वृत्तिरूपाधेयतानिष्ठप्रकारतामादाय लक्षणसमन्वय इत्यदोषात् ।

ननु किमत्र लक्षणम् ? किमतीतवस्तुविषयकज्ञानजनकशब्दप्रयोगजनकतावच्छेदकप्रकारताश्रयाधेयतानिरूपकत्वम्, किं वाऽतीतशब्दप्रयोगजनकतावच्छेदकप्रकारताश्रयाधेयतानिरूकत्वम् ? नोभयमपि सम्भवति । आत्माश्रयात् । लक्षणघटकं हि जनकत्वं नियतपूर्वकालवृत्तित्वरूपम् । तत्र च कालो घटकः । एवं प्रथमेऽतीतवस्त्वित्यस्य शब्दप्रयोगाधिकरणकालवृत्तिध्वंसप्रतियोगीत्यर्थ इति च तत्र कालो घटकः । ननु लक्षणे लक्षणस्य घटकत्वे ह्यात्माश्रयः । कालत्वमतीतव्यवहारहेतुत्वमिति नोच्यते । किं तु कालस्येदं लक्षणमिति । लक्षणे तु कालत्वमेव घटकम् । तच्च तद्व्यक्तित्वादिरूपमिति न दोष इति चेत्; तथाऽपि लक्षणघटकस्य कालत्वस्यैव लक्षणत्वसम्भवेन लक्ष्यतावच्छेदकघटितलक्षणवर्णनमयुक्तम् । न च लक्ष्यं

किञ्चिद्रूपेण बुध्वा तस्य किं लक्षणमिति प्रश्ने प्रष्टुर्यत् लक्ष्येऽन्यूनानतिप्रसक्तत्वेन न ज्ञातम् , तल्लक्षणं वक्तव्यम् । यथा पृथिवीं घटपटादिकां पृथिवीत्वेन बुध्वा तल्लक्षणप्रश्ने गन्धो लक्षणमुच्यते तद्वत् । प्रकृते लक्ष्यज्ञाने सति कालत्वं ज्ञातमिति लक्षणप्रश्ने ज्ञातस्य तस्यैव कथनं न युक्तमिति वाच्यम् । तथा सत्यतीतव्यवहारहेतुत्वरूपप्रकृतलक्षणस्यापि कथनासम्भवात् । पुरुषस्य कालज्ञानं ह्यतीतोऽयं अनागतोऽयमित्येवम् । एवमतीतत्वादिज्ञाने सत्यतीतत्वादिघटके कालेऽतीतत्वादिज्ञानविषयत्वमपि ज्ञायेतैव । अतो ज्ञातस्य तस्य न लक्षणत्वमिति । किञ्च पृथिवीति ज्ञानमात्रेणेतरव्यावृत्ततया न ज्ञातमिति हि गन्धो लक्षणमुच्यते । तद्वत् काल इति ज्ञानमात्रेणेतरव्यावृत्तिज्ञानाभावादिदं लक्षणमिति वक्तव्यम् । न च तत्सम्भवति । एतल्लक्षणमध्येऽपि कालत्वेनैव कालघटनादविशेषात् । किञ्च वर्तमानकालवृत्तिध्वंसप्रतियोगिविषयकज्ञानजनकशब्दप्रयोगजनकज्ञानविषयत्वापेक्षया वर्तमानकालवृत्तिध्वंसप्रतियोगिविषयकज्ञानविषयत्वमेव लघुलक्षणं भवितुमर्हति । लघुतरं च कालविषयकज्ञानविषयत्वं , लघुतमं च कालत्वमेव । लक्ष्यतावच्छेदकस्य लक्षणकोटिप्रवेशाङ्गीकारवल्लक्षणत्वमपि युज्यत एव । तस्मादेष शिरोवेष्टनेन नासिकास्पर्शो न युज्यत इति चेत्— सत्यम् । अथापि, काल इति किमर्थमतिरिक्तं द्रव्यं कल्प्यम् । वर्तमानकालः, अतीतकाल इत्यादेस्तत्तत्सूर्यपरिस्पन्दपरतयैव निर्वाहात् । परिस्पन्दश्च क्रियेति नातिरिक्तवस्तुकल्पनेत्याशङ्का कस्यचिद्भवेत् । तत्र, अतिरिक्तानङ्गीकारेऽतीतादिव्यवहारो नोपपद्यते । अतीत इति हि शब्दप्रयोगाधिकरणकालवृत्तिध्वंसप्रतियोगीत्यर्थकम् । तत्र कालपदेन परिस्पन्दग्रहणे तस्य शब्दप्रयोगाधिकरणत्वं न भवति । सूर्यनिष्ठक्रियायाः पुरुषनिष्ठोच्चारणक्रियाधिकरणत्वायोगात् । एवं घटादिध्वंसस्यापि न तद्वृत्तित्वम् ।

**प्राच्यादिव्यवहारहेतुः दिक् । सा चैका विभ्वी नित्या च । ज्ञानाधिकरणमात्मा । स द्विविधः, परमात्मा जीवात्मा चेति । तत्रेश्वरः सर्वज्ञः परमात्मा एक एव ।**

---

अतः शब्दप्रयोगाधिकरणत्वघटादिध्वंसाद्याश्रयोऽतिरिक्तकालः । तदाश्रयत्वेन च स प्रतीतिबलात्स्वीकार्यः । प्रतीतिश्च व्यवहारान्यथाऽनुपपत्त्या सिद्धेत्येवं तत्परिहारायातीतादिव्यवहारहेतुरित्युक्तम् । तथा च परिस्पन्दादिव्यावृत्ततया कालज्ञानमतीतादिव्यवहारहेतुत्वेन भवतीति तल्लक्षणमिति । अत्र 'अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानी' ति सूत्रानुसारे अतीतादिव्यवहारो हेतुः साधकप्रमाणं यस्य स इति विग्रहेणातीतादिव्यवहारानुमेयत्वं कालस्य विवक्षितमित्यपि वक्तुं शक्यम् । अतीतादिव्यवहारः सूर्यपरिस्पन्दाद्यतिरिक्तवस्तुविषयकः शब्दप्रयोगाद्यधिकरणतया किञ्चिद्विषयकत्वादित्येवमनुमानप्रकारः ।

**प्राची**ति । विग्रहादिकं पूर्ववत् । तथा च प्राचीविषयकज्ञानजनकशब्दप्रयोगजनकतावच्छेदकविशेष्यताश्रयत्वमिति प्राचीशब्दप्रयोगजनकतावच्छेदकविशेष्यताश्रयत्वमिति वा निष्कर्षः । प्राचीशब्दार्थो ह्युदयगिरिसन्निहिता दिगिति । तत्र दिशो विशेष्यत्वमेवेति ।

**ज्ञाने**ति । ज्ञानस्याधिकरणमाधारतावान् । निरूपितत्वं षष्ठ्यर्थः । ज्ञानपदस्य ज्ञाननिरूपिते लक्षणा । आत्मनि समवायेन ज्ञानमस्तीत्यात्मा ज्ञानाधिकरणम् । न च विषयतासम्बन्धेन घटादौ कालिकसम्बन्धेन काले च ज्ञानसत्त्वादतिव्याप्तिरिति वाच्यम् ; समवायेन ज्ञानं लक्षणमित्याशयात् । तत्र परमात्मजीवात्मनोः । घटकत्वं त्रलोऽर्थः । **परमात्मे**त्यत्रान्वेति । **सर्वज्ञः** सर्वपदं सर्वविषयकलाक्षणिकम् । अभेदेन ज्ञाधात्वर्थज्ञाने तदन्वयः । एकः, एकत्वसंख्याविशिष्टः । एकत्वातिरिक्तसंख्यापर्याप्त्यनधिकरणत्वमेवकारार्थः । अस्याश्रयतासम्बन्धेन परमात्मन्यन्वयः ।

**जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च ।**

---

अन्यपदार्थानां च तत्रभेदेन । एवकारार्थे ईश्वरत्वं सर्वज्ञत्वं च हेतुः । जीवस्त्विति । तुशब्देन परमात्मापेक्षया वैलक्षण्यमाह । प्रतिशरीरं भिन्न इति । जीवः शरीरे शरीरे भिन्नः, जीव एकैकशरीरावच्छिन्नोऽपि शरीरान्तरावच्छिन्नजीवाद्भिन्न इति भावः । अयमर्थः—भिन्न इत्युक्तौ कस्माद्भिन्न इत्याकांक्षायां शरीराद्भिन्न इति तावन्न विवक्षितम् । अतो जीवाद्भिन्न इति वक्तव्यम् । तत्र यत्किञ्चिज्जीवभेदोक्तौ जीवद्वयमात्रसिद्धिः स्यात् न त्वनन्तजीवसिद्धिः । जीवसामान्यभेदोक्तौ तु जीवे तदसम्भवः । अतः शरीरान्तरावच्छिन्नजीवभेदो वाच्यः । तत्र शरीरान्तरेत्यस्य न स्वावच्छेदकशरीरभिन्नशरीरेत्यर्थः, तथा सति जीवद्वयत्रयाङ्गीकारेऽपि क्षतिविरहात्; स्वावच्छेदकशरीराण्येतज्जीवीयानि, तद्भिन्नशरीराण्यन्यजीवीयानि, तदवच्छिन्नजीवसामान्यभेदो जीवेऽस्तीति । अतस्तस्य यत्किञ्चिच्छरीरभिन्नशरीरेत्यर्थः । तथा च जीवद्वयाङ्गीकारे एकैकस्य बहुशरीरसद्भावेन यत्किञ्चिच्छरीरपदेनैकशरीरग्रहणे तद्भिन्नशरीरेत्यनेन तज्जीवीयशरीरान्तरस्यापि ग्राह्यतया तदवच्छिन्नजीवः स एवेति न तस्मिन् जीवे तादृशजीवसामान्यभेदसिद्धिः । अतोऽनन्तजीवप्रतिपादकत्वमस्य वाक्यस्य । एवमप्येकस्य जीवस्यैकमेव शरीरमन्यानि शरीराणि सर्वाण्यन्यस्यैकस्येत्यङ्गीकारे शरीरपदेनैकशरीरकजीवपरिग्रहे यत्किञ्चिच्छरीरं तदीयम्, तद्भिन्नशरीरावच्छिन्नजीवसामान्यभेदस्तस्मिन्नस्तीति वाक्यार्थपर्यवसानान्नानन्तजीवपरत्वसिद्धिः, अतः प्रतिशरीरमित्युक्तम्, तथाचैकैकमपि शरीरं पृथक्पृथग्गृहीत्वा तत्र तत्र यत्किञ्चिच्छरीरभिन्नशरीरावच्छिन्नजीवसामान्यभिन्नत्वं जीव उपपादनीयम् । इदं चैकस्य शरीरद्वयाङ्गीकारेऽपि न भवति, यत्किञ्चिच्छरीरपदेन तद्द्वया-

न्तर्गतैकशरीरग्रहणे तदन्यशरीरं तद्द्वयान्तर्गतमन्यदपीति तदवच्छिन्नजीवसामान्यभिन्नत्वस्य क्वचिदपि जीवेऽसम्भवात् । अतः शरीरभेदेन जीवभेदसिद्धिः । अयमत्र बोधः । प्रतिशब्दार्थोऽव्यापकत्वमधिकरणनिष्ठाभावाप्रतियोगित्वं भेदान्वयि । अधिकरणेऽवच्छिन्नत्वसम्बन्धेन शरीरान्वयः । भिन्न इत्यत्र भेदो यत्किञ्चिच्छरीरभिन्नशरीरावच्छिन्नजीवसामान्यप्रतियोगिकभेदरूपः, शरीरविशिष्टभेद इति यावत्, वैशिष्ट्यं स्वभिन्नशरीरावच्छिन्नजीवत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन । तथा च शरीरावच्छिन्नाधिकरणनिष्ठाभावाप्रतियोगित्वाश्रयशरीरविशिष्टभेदनिरूपिताश्रयतावदभिन्नो जीव इति । यदि तु प्रतिशरीरमित्यस्य शरीरत्वव्यापकत्वरूपार्थविवक्षा, तदा यत्र यत्र शरीरत्वम्, तत्र तत्र तादृशभेद इत्यर्थो वाच्यः । तत्र शरीरत्वं शरीरेऽस्ति, तत्र भेदस्य सम्बन्धः स्वाश्रयावच्छेदकत्वम् । अतो व्यापकता स्वाश्रयावच्छेदकत्वसम्बन्धावच्छिन्ना ग्राह्या । व्यापकताघटकाभावीयप्रतियोगिता तत्सम्बन्धावच्छिन्नेत्युक्तं भवति । एवं च प्रतिशब्दस्याभावाप्रतियोगित्वमर्थः । अभावे शरीरस्याधेयतासम्बन्धेनान्वयः । शरीरानिष्ठाभावाप्रतियोगित्वमेव हि शरीरत्वव्यापकत्वम् । यद्यपि भिन्न इत्यस्य पूर्वोक्तार्थकत्वे जीवपदार्थस्योद्देश्यतयोद्देश्यविधेयभावमहिम्नैव जीवः सर्वोऽपि निरुक्तभेदवानित्यर्थलाभे सर्वसिद्ध्या प्रतिशरीरमित्यस्य वैयर्थ्यमित्याशङ्का प्रसजति ; अथापि प्रतिशरीरमिति पदप्रयोगवशादेव भिन्नपदस्य शरीरभेदातिरिक्ततादृशजीवभेदरूपविवक्षितार्थसिद्धिः । एवं सर्वत्रोद्देश्यविधेयभावस्थले व्याप्यव्यापकभावप्रतीतिनियमाभावाज्जीवानन्त्यं न निश्चीयेतेति तदुक्तमिति समाधानं द्रष्टव्यम् । अत एकैकशरीरावच्छिन्नोऽपि जीवः शरीरान्तरावच्छिन्नजीवाद्भिन्न इत्यत्र प्रथमपदस्यैव प्रतिशरीरमित्यस्य न वैयर्थ्यम् । अत्र चैकस्यापि जीवस्य जन्मभेदेन शरीरभेदस्येष्टत्वादीदृशभेदो

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः, तच्च प्रत्यात्मनियतत्वा-**

जीवे दुर्वचः । तथा योगजधर्मबलेन बहुशरीरपरिग्रहस्यापि संमततया योगिनि जीवेऽयं भेदो न भवति । अतः स्वभिन्नशरीरेत्यस्य स्वभिन्नस्व-समानकालिकयोगजधर्माजन्यशरीरेत्यर्थ इति बोध्यम् ।

एवं तावत्प्रतिशरीरमित्यत्र शरीरपदस्य यथाश्रुतार्थरक्षणेन, तत्तच्छरीरे शरीरान्तरावच्छिन्नजीवाद्भिन्न इति प्रयोगसमानार्थकत्वानुभवानुसारेण च बोधो वर्णितः । केचित्तु शरीरपदं यत्किञ्चिच्छरीरभिन्नशरीरपरम् । तादृशशरीरत्वव्यापकभेदप्रतियोगी जीव इति बोधः । व्यापकता स्वाश्रयावच्छेदकत्वसंबन्धेनेत्याहुः । तत्र भिन्नशब्दस्य भेदप्रतियोगीत्यर्थवर्णन-मयुक्तम् ; घटः पटाद्भिन्न इत्यादौ भेदानुयोगीत्येवानुभवात् । एवं च स्वाश्रयावच्छेदकत्वसंबन्धविवक्षणे घटभेदमादायान्यथासिद्धिरिति स्वप्रति-योग्यवच्छेदकत्वं संबन्ध इति वक्तव्यम् । एवमपि जीवस्यैकत्वेऽपि जीव-घटोभयभेदमादाय जीवस्य भेदाश्रयत्वं भेदप्रतियोगित्वं चास्तीत्यन्यथा-सिद्धिः । तथा भेदे व्यापकत्वविवक्षामपेक्ष्य यत्किञ्चिच्छरीरभिन्नशरीराव-च्छिन्नात्मत्वावच्छिन्नप्रतियोगिताकत्वरूपलघुधर्मनिवेशेनैव सामञ्जस्यात्तदु-पेक्षणमयुक्तमिति मूलस्य न्यूनता स्यादित्यद्विरस्वरसः ।

मनो लक्षयति सुखेति । सुखमादिर्येषां तानि सुखादीनामुपलब्धिः । षष्ठ्यर्थो विषयित्वम् । तस्यास्साधनं कारणतावत् । निरूपितत्वं षष्ठ्यर्थः । समास उपलब्धिपदस्य सुखतद्भिन्नविषयकोपलब्धिनिरूपितेति लक्ष्यार्थः । अभेदेन कारणतायामन्वयः । तादृशकारणतावदभिन्नामिन्द्रियाभिन्नं मन इति बोधः । सुखप्रत्यक्षकारणत्वे सतीन्द्रियत्वं लक्षणम् । आदिपदं सुखव-दुःखादिकमादायापि लक्षणं सुवचमिति प्रदर्शनाय । चक्षुरादावात्ममनःसं-योगरूपसन्निकर्षे चातिव्याप्तिवारणाय दलद्वयम् । **प्रत्यात्मनियतत्वा-**

**द्नन्तं परमाणुरूपं नित्यं च ।**

**चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च शुक्लनीलपीतरक्तहरितकपि-**

दिति । **नियतं** व्यवस्थितम् । प्रतिशब्दघटितपदसमभिव्याहृतश्च नियतशब्दस्तत्पदार्थीयतत्तद्व्यक्तिव्यवस्थितपरः । तद्व्यवस्थितत्वं च तदितरासम्बन्धित्वे सति तत्सम्बन्धित्वम् । तथा च यत्किञ्चिदात्मभिन्नासम्बन्धित्वे सति तत्सम्बन्धित्वम् । स्वभिन्नासम्बन्धित्वस्वसम्बन्धित्वोभयसम्बन्धेनात्मविशिष्टत्वं प्रकृते नियतत्वम् । प्रतिशब्दस्य पूर्ववद्व्यापकत्वमभावप्रतियोगित्वमर्थो नियतत्वेऽन्वेति । आत्मन आधयतासम्बन्धेनाभावेऽन्वयः । व्यापकत्वं चेदं निरूपकतासम्बन्धेन । यत्र यत्नात्मत्वम् , तत्र तन्नात्मनि मनोगतमात्मविशिष्टत्वं निरूपकतासम्बन्धेनास्तीति । आत्मनिरूपितवैशिष्ट्ये ह्यात्मा निरूपकः । ज्ञानज्ञाप्यत्वं पञ्चम्यर्थोऽनन्तत्वान्वयि । अनन्तमिति बहुव्रीहिरिति अन्तपदस्य पर्याप्तिसम्बन्धावच्छिन्नसंख्यानिष्ठप्रतियोगिताकाभाववदित्यर्थे , स्वव्यापकसंख्यावत्त्वसम्बन्धावच्छिन्नमनस्त्वनिष्ठप्रतियोगिताकाभाववदित्यर्थे वा लक्षणा । नञ् तात्पर्यग्राहकः । तथा चात्मनिष्ठाभावीयनिरूपकतासम्बन्धावच्छिन्नप्रतियोगित्वाभावव-दात्मविशिष्टत्व-विषयकज्ञान - ज्ञाप्यत्वाश्रय, स्वव्यापकसंख्यावत्त्वसम्बन्धावच्छिन्नमनस्त्वनिष्ठप्रतियोगिता - काभाववदभिन्नं मन इति बोधः । आत्मानो ह्यनन्ताः । अतः प्रत्यात्मं व्यवस्थितत्वान्मनोऽप्यनन्तमिति । मनस आत्मसम्बन्धित्वं चात्मनिष्ठसुखाद्युत्पादकविलक्षणसंयोगाश्रयत्वं । **परमाणुरूप**मिति । रूपपदस्य परमाणुत्ववति लक्षणा । पृथिव्यादिपरमाणव इव मनांस्यपि परमाणूनीति भावः ।

एवं द्रव्याणि न्यरूप्यन्त । अथ गुणा निरूप्यन्ते । तत्र प्रथमं रूपं निरूपयन् लक्षयति **चक्षुरि**ति । चक्षुरेव चक्षुर्मात्रम् । तेन ग्राह्यः ।

एवकारस्तावत् स्वसमभिव्याहृतपदार्थस्य येन सम्बन्धेन यस्मिन् पदार्थेऽन्वयः समभिव्याहृततत्पदार्थभिन्नपदार्थप्रतियोगिकतत्सम्बन्धाभावं तस्मिन् पदार्थे प्रतिपादयति । अत्र च चक्षुःपदार्थस्य तृतीयार्थे जन्यत्वे निरूपितत्वसम्बन्धेनान्वय इति एवकारश्चक्षुर्भिन्ननिरूपितत्वाभावार्थवाचकः । तस्य तृतीयार्थ एव जन्यत्वेऽन्वयः । य एवकारार्थः स मात्रपदार्थ इति । यद्वा एवकारसमभिव्याहृतपदार्थे यादृशविशिष्टार्थसम्बन्धो विशिष्टवाक्येन प्रतिपाद्यते, तादृशविशिष्टार्थाभावव्याप्यभेदप्रतियोगित्वमेवकारार्थः । तस्य समभिव्याहृतपदार्थेऽन्वयः । यथा जले मधुररस एवेत्युक्तौ मधुररसे जलवृत्तित्वं वाक्येन प्रतिपाद्यते । एवकारस्य जलवृत्तित्वाभावव्याप्यभेदप्रतियोगित्वमर्थः । तस्य मधुररसेऽन्वयः । यत्र यत्र मधुररसभेदस्तिक्तरसादौ तत्र जलवृत्तित्वाभाव इति व्याप्तिः । जले इति सप्तम्या आधेयत्वमर्थो मधुररसेऽन्वेति । तथा च जलवृत्तित्वाभावव्याप्यभेदप्रतियोगित्वाश्रयो जलनिरूपिताधेयत्वाश्रयो मधुररस इति बोधः । अत्र चैवकारार्थे घटको भेदः साजात्यरूपः । साजात्यं च वक्तृबुद्ध्यनुसारेण तत्र तत्र विलक्षणम् । अतो जले मधुररसभिन्नशीतस्पर्शादेः सत्त्वेऽपि न वाक्यार्थक्षतिः । रसानां मध्ये जले मधुर एवेत्येव वक्तुस्तात्पर्येण रसान्तर्भूतत्वघटितसाजात्यस्य भेदपदार्थत्वात् । तथा च प्रकृते चक्षुर्ग्राह्यो गुणो रूपमिति वाक्येन चक्षुषि रूपविषयकग्रहनिष्ठजन्यतानिरूपकत्वस्य बोधात् मात्रपदस्य रूपविषयकग्रहनिष्ठजन्यतानिरूपकत्वाभावव्याप्यभेदप्रतियोगित्वमर्थः । तस्य चक्षुष्यन्वयः । चक्षुःपदार्थस्य तृतीयार्थे जन्यत्वे । तस्य ग्रहधात्वर्थे ज्ञाने । समासे च मात्रपदं तादृशभेदप्रतियोगिचक्षुर्जन्येत्यर्थलाक्षणिकम् । अभेदेन तस्य ग्रहेऽन्वयः । ण्यत्प्रत्ययस्य विषयतावानर्थः । ग्रहस्य विषयतायां निरूपितत्वं सम्बन्धः । तथा च तादृशविषयतावदभिन्नगुणाभिन्नं रूपमिति बोधः । एव-

कारार्थघटकव्याप्यव्यापकभावनिवेशे गौरवमिति लाघवाच्चक्षुर्भिन्नाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वे सति गुणत्वमिति रूपलक्षणं फलति । अथ वा एवकारसमभिव्याहृतपदार्थे यादृशविशिष्टवाक्यार्थसम्बन्धो वाक्येन बोध्यते, तादृशविशिष्टार्थव्यापकत्वमेवकारार्थः । जले मधुररस एवेति वाक्यस्य रसमध्ये जले मधुर एवेत्यत्र तात्पर्यात् जलवृत्तिरसत्वव्यापकत्वं मधुररसे बोध्यते । व्यापकत्वमभेदसम्बन्धेन । प्रकृतवाक्यस्य चेन्द्रियेषु मध्ये चक्षुषैव ग्राह्यं रूपमित्यर्थे तात्पर्यात् चक्षुषीन्द्रियान्तर्गतत्वविशिष्टं गुणविशेषविषयकग्रहनिष्ठजन्यतानिरूपकत्वं वाक्येन बोध्यत इति मात्रपदस्य तादृशबोध्यमानधर्मव्यापकत्वमर्थः । अथ वा एवकारसमभिव्याहृतपदार्थस्य यादृशविशिष्टार्थेन यः सम्बन्धः प्रकृतवाक्यसिद्धः, तस्मिन् तादृशपदार्थं प्रति तेन सम्बन्धेन व्यापकत्वमेवकारार्थः । तादृशविशिष्टार्थव्यापकत्वं च तादृशविशिष्टार्थनिष्ठाभावाप्रतियोगित्वमात्रम् । प्रकृते च चक्षुषि रूपात्मकगुणविशेषविषयकग्रहनिष्ठजन्यत्वं प्रति निरूप्यनिरूपकभावसम्बन्धेन व्यापकत्वमेवकारावगम्यम् । तस्य चक्षुष्याश्रयतासम्बन्धेनान्वयः । एवं चक्षुषि गुणविशेषग्रहजननव्यापकत्वोक्तौ रूपे चक्षुरितराग्राह्यत्वं फलति । इदं च संख्यावारणाय । गुरुत्ववारणाय चक्षुर्ग्राह्यत्वदलम् । यद्वस्तु यदिन्द्रियग्राह्यं तन्निष्ठा जातिस्तदभावोऽपि तदिन्द्रियग्राह्याविति न्यायेन रूपत्वाद्यावतिव्याप्तिरिति गुणत्वनिवेशः । अत्र चक्षुर्भिन्नेन मनसा रूपस्य ग्राह्यत्वादसम्भवः । अतो बहिरिन्द्रियेषु मध्ये चक्षुषैव ग्राह्यमित्यत्र वाक्यतात्पर्यात् चक्षुर्भिन्नबहिरिन्द्रियाग्राह्यत्वे सतीति प्रथमदलार्थः । एतावता गुरुत्वात् त्वगग्राह्यत्वे सतीत्येव निवेश्यम् । तथा च त्वगग्राह्या चक्षुर्ग्राह्या च या जातिस्तद्वद्गुणत्वं लक्षणम् । एवं च न परमाणुरूपेऽव्याप्तिः । त्वगग्राह्यत्वे सतीति पृथग्रूपविशेषणत्वेनानिवेश्य जातौ तन्निवेशा-

**शाचित्रभेदात् सप्तविधम् । पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यां सप्तविधम्, अभास्वरशुक्लं जले, भास्वरशुक्लं तेजसि ।**

**रसनग्राह्यो गुणो रसः । स च मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधः । पृथिवीजलवृत्तिः । तत्र पृथिव्यां षड्विधः, जले तु मधुर एव ।**

**घ्राणग्राह्यो गुणो गन्धः । स द्विविधः सुरभिरसुरभिश्चेति । पृथिवीमात्रवृत्तिः ।**

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स त्रिविधः शीतोष्णानुष्णाशीतभेदात् । पृथिवीजलतेजोवायुवृत्तिः । तत्र शीतं जले, उष्ण-**

---

त्रातीन्द्रियसंख्यायामतिव्याप्तिः । प्रभात्वजातिमादाय प्रभायामतिव्याप्तिवारणाय गुणत्वम् । तच्चेत्यादि । पूर्ववदर्थः । शुक्लेति । शुक्लादिशब्दाः पुंसि, चित्रशब्दः क्लीबे । पृथिवीजलतेजोवृत्तीति । तेषु वृत्तिर्यस्येति विग्रहः । वृत्तिपदं पृथिवीजलतेजोनिरूपिताधेयतावल्लाक्षणिकम् । तत्र पृथिवीजलतेजस्सु । घटकत्वं सप्तम्यर्थः पृथिव्यामन्वेति । तदित्यनुषज्यते । तद्घटकपृथिवीवृत्ति रूपं सप्तविधमिति । **अभास्वरशुक्लमिति ।** तदित्यनुषङ्गाज्जलनिरूपिताधेयतावद्रूपमभास्वरशुक्लाभिन्नमिति बोधः । नात्राभास्वरशुक्लोद्देशेन जलवृत्तित्वं विधेयम् । अभास्वरशुक्लत्वस्य पूर्वमज्ञातत्वात्, तस्य पृथिव्यामपि सत्त्वाच्च । अतस्तदित्यनुषङ्गाज्जलवृत्तिरूपोद्देशेनाभास्वरशुक्लविधानम् । भास्वरत्वं परप्रकाशकत्वम्, तेजोरूपमात्रवृत्तिजातिरेव वा । **असुरभिरिति ।** सुरभिभिन्न इत्यर्थः । स च द्विविधो दुर्गन्ध उपेक्षणीयगन्धश्चेति । **पृथिवीमात्रवृत्तिरिति ।** गन्धनिष्ठाधेयतानिरूपकत्वव्यापकत्वं मात्रपदार्थः । समासे वृत्तिपदं पृथिवीतरावृत्तित्वविशिष्टपृथिवीवृत्तित्वविशिष्टे लाक्षणिकम् । **त्वगित्यादि ।** रूपलक्षणवाक्योक्तरीत्या सर्वमनुसन्धेयम् । एवञ्च गुणपदं वायोः प्रत्यक्षत्वमते तत्रातिव्याप्तिवारणाय । **उष्ण इति ।** ननु 'गुणे शुक्लादयः पुंसी'ति शुक्लादिशब्दानां गुणवाचित्वे पुंलिङ्गमेव युक्तमिति प्रतीयते । अथाप्य-

**स्तेजसि, अनुष्णाशीतः पृथिवीवाय्वोः । रूपादिचतुष्टयं पृथिव्यां**

भास्वरशुक्लमित्यादिः प्रयोगस्तच्छब्दानुषङ्गेण समर्थनीयः ; शुक्लादिशब्दानां सर्वत्र विशेष्यसमानलिङ्गत्वमेव । एवञ्च विशेष्यानुपादाने 'सामान्ये नपुंसक'मिति क्लीबप्राप्तौ गुणवाचित्वे तदपवादार्थं 'गुणे शुक्लादयः पुंसी'त्युक्तमिति कोशस्यान्यतात्पर्यस्थापनात् । शीतं जल इति क्लीबनिर्देशश्च 'शीतं गुण' इति कोशाद्गुणवाचित्वे क्लीबावश्यकतया सम्यगेव । उष्ण इति तु कथम्? 'उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गक' इति गुणिवाचित्वे विशेष्यलिङ्गत्वेऽपि 'शीतोष्णमांसरुधिरमुखाक्षिद्रविणं बल'मिति क्लीबसङ्ग्रहे पठितत्वेन गुणवाचित्वे क्लीबस्यावश्यकत्वात् । न च स इति स्पर्शवाचिविशेष्यपदानुषङ्गात् विशेष्यानुपादानाभावात्पुंलिङ्गमिति वाच्यम् । शीतमिति पूर्वं प्रयुक्ततयाऽनुषङ्गाभावदर्शनात् । न चानुषङ्गेऽननुषङ्गे वा शीतमिति क्लीब एव । अन्यथा शीतं गुण इति कोशवैयर्थ्यादिति वाच्यम् । तर्हि शीतोष्णेति कोशावैयर्थ्यायोष्णशब्देऽपि क्लीबस्यैव युक्तत्वादिति चेत्, सत्यम् शीतमित्यत्रानुषङ्गाभावेऽप्यत्रानुषङ्गस्याध्याहारस्य वाऽङ्गीकारेणैव पुंलिङ्गोपपत्तिः । अत एवोपर्यनुष्णाशीत इत्यप्युपपन्नम् । कोशस्तु विशेष्यानुपादाने सामान्ये नपुंसकस्य प्राप्तस्यानुवादमात्रमिति बहुलप्रयोगानुसारेण कोशस्यान्यथा नयनमिति । अथ वा सुरभ्यादिशब्दवद्धर्मिपर्यन्तवाचिन उष्णादिशब्दस्योष्णानिष्ठेत्येवं लक्षणयाऽर्थः । द्रव्येष्विव गुणादिष्वपि नित्यानित्यविवेको व्युत्पादनीयः । तत्र रूपरसगन्धस्पर्शेषु विवेक एकरूप इति तत्र तत्र पृथगनुक्त्वा चतुष्टयनिरूपणानन्तरमेकदैव तं व्युत्पादयति रूपादीति । रूपमादिर्येषां रूपरसगन्धस्पर्शानां ते रूपादयः । तेषां चतुष्टयम् । षष्ठ्यर्थो घटितत्वम् । आदिपदे बहुव्रीहिप्रयुक्ता चतुष्टयपदेन सह तत्पुरुषप्रयुक्ता च लक्षणा । अतो रूपतद्भिन्नघटितेत्यर्थः । चतुरो अवयवा यस्य तच्चतुष्टयम् । यच्छब्दः समुदायपरः । अव-

**पाकजमनित्यं च, अन्यत्रापाकजं नित्यमनित्यं च, नित्यगतं नित्यम्, अनित्यगतमनित्यम् ।**

---

**यवाः** घटकाः । षष्ठ्यर्थो निरूपितत्वम् । तथा च यन्निरूपितनिरूपितत्वाश्रयघटकताश्रयाश्चत्वारः । चतुर्घटितसमुदाय इति समासार्थः । रूपतद्भिन्नघटिताभिन्न-चतुर्घटितसमुदाय इति विशिष्टार्थः । अर्थाद्रूपादय एव चत्वार इति सिद्ध्यति । **पृथिव्यां रूपादिचतुष्टयं** पृथिवीनिरूपिताधेयत्वाश्रयतच्चतुष्टयम् । **पाकजं** पाकाज्जायत इति । पाकपदं पाकनिरूपिते लाक्षणिकम् । **अभेदेन** जनिधात्वर्थजन्यतायामन्वयः । पाको विलक्षणतेजःसंयोगः । पाकनिरूपिताभिन्नजन्यताश्रयाभिन्नमिति विशिष्टार्थः । चार्थसमुच्चयस्यात्रानित्यमित्यत्र चान्वयः । पाकजत्वादनित्यमिति तात्पर्यम् । नात्र सर्वं पाकजमित्युच्यते, अपाकजस्याप्यवयवरूपादिजन्यस्य रूपादेः पटादौ सत्त्वात् । किं तु 'अनित्यगतमनित्यमित्यत्र न विवादः । नित्यगतविषये विवेचने जलपरमाण्वादौ पाकाभावान्नित्यम् । पाकसत्त्वात्तु पृथिवीपरमाणुगतमप्यनित्य'मितीहाभिसन्धिः । अथ वा **पाकज**मिति । साक्षात् परम्परया वा पाकप्रयोज्यमित्यर्थः । **अन्यत्र** पृथिवीभिन्ने । आधेयत्वं सप्तम्यर्थः । **रूपादी**त्यनुषज्यते । न तु रूपादिचतुष्टयमिति, जलादौ गन्धाभावेन चतुष्टयासम्भवात् । पृथिवीभिन्ननिरूपिताधेयतावत् रूपतद्भिन्नमित्यर्थः । पूर्वं रूपादीति पृथक्पदमपि चतुष्टयविशेषणं कर्तुं शक्यम् । तदा रूपमादिर्यस्मिन्निति विग्रहः । **चे**त्यपाकजसमुच्चये । ननु पाकजत्वादनित्यत्वेऽपाकजत्वान्नित्यत्वमेवेति कथमनित्यत्वमपि । एवमेकस्य नित्यत्वमनित्यत्वं चायुक्तम् । यदि क्वचिन्नित्यत्वमन्यत्रानित्यत्वं च विवक्षितम् । तर्हि कुत्रेत्यत्राह **नित्ये**ति । नित्यं गतम् । **गतं** प्राप्तमाधेयमित्यर्थः । **नित्य**मिति । द्वितीयार्थो निरूपितत्वं । नित्यपदस्य नित्यनिरूपिते लक्षणा । आधेयतायामभेदेन तदन्वयः । अनित्यगतमाश्रयोत्प-

**एकादिव्यवहारहेतुः संख्या । नवद्रव्यवृत्तिः । एकत्वादिपरार्ध-पर्यन्ता । एकत्वं द्विविधं नित्यमनित्यं चेति । नित्यगतं नित्यम् , अनित्यगतमनित्यम् , द्वित्वादिकं तु सर्वत्रानित्यमेव ।**

---

त्रावुत्पद्यते आश्रयनाशे नश्यति । नित्यगतं त्वनादित्वान्नोत्पद्यते , नाशकाभावाच्च न नश्यतीति भावः ।

संख्यां लक्षयति एकेति । एक इत्यादिर्येषां ते । एकादयश्च ते व्यवहाराश्च तेषां हेतुः । व्यवहारपदमेकतद्भिन्नशब्दप्रयोगनिरूपितेत्यर्थकम् । हेतुः जनकज्ञानविषयः । जनकत्वे तदन्वयः । तथा चैकशब्दादिप्रयोगजनकतावच्छेदकप्रकारताश्रयः संख्येत्युक्तं भवति । एकत्वादिव्यवहारहेतुरिति पाठे तु जनकतावच्छेदकविशेष्यताश्रयत्वमेव लक्षणम् , न तु प्रकारताश्रयत्वम् । ननु किमेकव्यवहारहेतुत्वं द्विव्यवहारहेतुत्वमित्यादि पृथग्लक्षणम् , उत तत्तद्व्यवहारान्यतमहेतुत्वमित्येकं लक्षणम् । नाद्यः, पृथग्लक्षणस्य संख्यायामेकैकस्यामेव सम्भवेन संख्यान्तरेष्वव्याप्तेः । नान्त्यः, विशिष्य परार्धपर्यन्तसंख्याज्ञानस्य युगपद्दुर्लभत्वादिति चेदुच्यते। संख्याशब्दप्रयोगजनकतावच्छेदकविशेष्यताश्रयत्वमेव संख्यालक्षणम् । एकादीत्येतत्तु प्रत्येकसंख्यालक्षणमिति । एकत्वमादिर्यस्याः सा । परार्धं पर्यन्तः पर्यन्ते वा यस्याः सा । एकत्वादिश्च सा परार्धपर्यन्ता चेति कर्मधारयः । षष्ठ्या घटकत्वमर्थ एकत्वे परार्धे चान्वेति । एकत्वस्यादित्वं प्राथम्यं स्वस्मात् पूर्वं संख्यान्तरराहित्यं स्वव्याप्यसंख्याशून्यत्वं स्वभिन्नसंख्याव्यापकत्वाभाव इति यावत् । पर्यन्तश्च स्वस्मादूर्ध्वं संख्यान्तरराहित्यं स्वसंख्याभिन्नसंख्याव्याप्यत्वाभावः । पर्यन्त इति सप्तम्याः सम्बन्धो वैशिष्ट्यमर्थः । बहुव्रीहौ लक्षणया स्वभिन्नसंख्याव्यापकत्वाभाववदेकत्वघटिताभिन्न, संख्यान्तरव्याप्यत्वाभाववत्परार्धघटिताभिन्नेत्यर्थः । द्वित्वादिकमिति । द्वित्वमादिर्यस्य तत् । आदित्वं स्वभिन्न- यत्पदार्थघटकसंख्याव्यापकत्वाभावः ।

**मानव्यवहाराऽसाधारणकारणं परिमाणम् । नवद्रव्यवृत्ति ।**

द्वित्वस्यैकत्वव्यापकत्वेऽपि यत्पदार्थघटकत्वेनाभिमता याः संख्यास्तद्घटकसं-ख्यान्तराव्यापकत्वमस्त्येव । समासार्थस्तु द्वित्वव्याप्यत्वाभाववत्संख्येति । सर्वत्रेत्यस्य पूर्वेणान्वयः । सर्वं नित्यमनित्यं च । नित्यानित्यवृत्तिता-दृशसंख्येत्यर्थः । एवकारार्थो व्यापकत्वमभेदसम्बन्धेन । द्वित्वादिव्याप-कताश्रयानित्याभिन्नमित्यर्थः । द्वित्वादिकं वस्तुनि न सर्वदा वर्तते । इदमेकमिदमेकमित्यपेक्षाबुद्धौ सत्यामुत्पद्यते । अपेक्षाबुद्धिनाशे च नश्य-तीत्यनित्यमेवेति भावः । परार्धसंख्या नामाष्टादशभिर्वारैर्दशगुणोत्तरैकत्व-संख्येति क्वचित् ।

मानेति । मानमिति व्यवहारः शब्दप्रयोगस्तस्यासाधारणं कारणं कारणतावत् । साधारणमित्यस्य तत्सम्बन्धित्वे सति तद्भिन्नसम्बन्धीत्यर्थः । प्रकृते च मानव्यवहारतद्भिन्नसम्बन्धीत्यर्थः । सम्बन्धित्वं प्रकृते निरूपि-तत्वम् । तथा च मानव्यवहारतद्भिन्नोभयनिरूपितभिन्नमसाधारणम् । मानव्यवहारभिन्नानिरूपितमानव्यवहारनिरूपितकारणताश्रयः परिमाणमिति फलितम् । मानव्यवहारतद्भिन्नोभयनिरूपितकारणता हि नाम तदुभय-निष्ठकार्यतानिरूपितकारणतैव । उभयनिष्ठकार्यतायामुभयनिष्ठ एव धर्मोऽ-वच्छेदकः । स च धर्मः कार्यत्वम् । अतः 'कार्यत्वावच्छिन्नकार्यता-निरूपितकारणता साधारणकारणता', 'कार्यत्वानवच्छिन्नकार्यतानिरूपित-कारणत्वमसाधारणकारणते'ति व्यवहारः । कार्यसामान्यकारणे कालादृष्टा-दौ मानव्यवहारं प्रत्यपि कारणत्वसत्त्वादतिव्याप्तिरतोऽसाधारणेति । वस्तु-तस्तु व्यवहारे व्यवहर्तव्यज्ञानमेव कारणम् । न तु व्यवहर्तव्यमिति प्रकृ-तलक्षणस्य कारणत्वरूपस्यासम्भवः स्यात् । अतो मानव्यवहारकारणी-भूतज्ञानविशेष्यत्वमेव पूर्ववद्वक्तव्यम् । मानव्यवहारकारणतावच्छेदकविशे-ष्यताश्रयत्वमिति यावत् । इदं च न कालादृष्टादौ । तस्य हि स्वरूपत

**तच्चतुर्विधम्, अणु महत् दीर्घं ह्रस्वं चेति ।**

**पृथग्व्यवहारासाधारणकारणं पृथक्त्वं, सर्वद्रव्यवृत्ति ।**

**संयुक्तव्यवहारहेतुः संयोगः, सर्वद्रव्यवृत्तिः ।**

**संयोगनाशको गुणो विभागः, सर्वद्रव्यवृत्तिः ।**

---

एव कारणत्वम्, न तु ज्ञानद्वारा । एवं चैवं परिष्कारसूचनायैवासाधारणेत्युक्तमिति । **अणु महद्दीर्घं ह्रस्वमिति** अणुत्वं महत्त्वं दीर्घत्वं ह्रस्वत्वमित्यर्थः । यथाश्रुते तेषां परिमाणविशिष्टवाचित्वमेव, न परिमाणमात्रवाचित्वमिति । यद्यपि परिमाणादारभ्य नित्यानित्यविवेको ग्रन्थकृता न प्रादर्शि, अथापि स यथायथं परिशीलनीयः ।

**पृथगिति** । सर्वं पूर्ववत् । **संयुक्तेति** । संयुक्ते इति व्यवहारः । संयोगस्य द्विनिष्ठत्वात् द्विवचनं युक्तमिति । संयुक्तशब्दजनकतावच्छेदकप्रकारताश्रयत्वं लक्षणम् । **संयोगेति** । नश धातोर्ध्वंसोऽर्थः । संयोगस्येति षष्ठ्यर्थोऽनुयोगित्वम् । यस्याभावः स प्रतियोगी । अभावोऽनुयोगी । समासे संयोगपदस्य संयोगानुयोगिनि लक्षणा । ण्वुलो जनकतावानर्थः । संयोगानुयोग्यभिन्नध्वंसनिरूपितजनकतावदभिन्नो गुणाभिन्न इति । संयोगनाशजनकत्वे सति गुणत्वं लक्षणम् । क्रिया, क्रियातो विभागः, विभागात् पूर्वसंयोगनाशः, उत्तरसंयोगोत्पत्तिः, क्रियानाश इति क्रमः । एवं संयोगनाशकत्वं विभागस्य । इदं च कर्मणोऽप्यस्ति । क्रियाभावे संयोगनाशोत्पत्त्यसम्भवात् । पूर्वजातविभागं प्रति अनन्तरजनिष्यमाणोत्तरसंयोगं च प्रतीव मध्ये जायमानं संयोगनाशं प्रत्यपि हेतुत्वस्य युक्तत्वाच्च । अतो गुणत्वनिवेशः । एवमप्यदृष्टेऽतिव्याप्तिः । अतः संयोगनाशत्वावच्छिन्नजन्यतानिरूपितजनकतावत्त्वे सतीति पूर्वदलं परिष्कार्यम् । अदृष्टे कार्यत्वावच्छिन्नजन्यतानिरूपितजनकतैवास्ति, न त्वियम् ।

**परापरव्यवहारासाधारणकारणे परत्वापरत्वे । ते द्विविधे, दिक्कृते कालकृते चेति । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् ।**

**आद्यपतनासमवायिकारणं गुरुत्वम् । पृथिवीजलवृत्ति ।**

**आद्यस्यन्दनासमवायिकारणं द्रवत्वम् । पृथिवीजलतेजोवृत्ति ।**

---

परेति । परं चापरं चेति परापरे । ते इति व्यवहारौ तयोरसाधारणकारणे । परव्यवहारासाधारणकारणत्वं परत्वलक्षणम् , अपरव्यवहारासाधारणकारणत्वमपरत्वस्य । अन्यत् पूर्ववत् । दिक्कृते दिशा कृते । कृञ उत्पत्त्यनुकूलव्यापारोऽर्थः । क्तप्रत्ययस्य फलवदित्यर्थः । आधेयत्वं तृतीयार्थः । समासे दिक्पदस्य दिङ्निष्ठे लक्षणा । दिङ्निष्ठाभिन्नो य उत्पत्त्यनुकूलव्यापारस्तज्जन्यफलवती इत्यर्थः । यत्र देशमादाय परत्वादिवर्णनम् , तत्र दिक्कृतत्वम् । कालमादाय, कालकृतत्वमिति दर्शयति दूरेति । दूरशब्दस्याधिकसंयुक्तसंयोगपरम्परावदित्यर्थः । दूरे तिष्ठतीति दूरस्थम् । सप्तम्या निरूपितत्वं स्थाधातोराधेयत्वं प्रत्ययस्याश्रयतावच्चार्थः । अधिकसंयुक्त-संयोगपरम्परावन्निरूपिताभिन्नाधेयताश्रयनिरूपिताधेयतावत्परत्वं दिक्कृताभिन्नमिति बोधः । समीपशब्दो न्यूनसंयुक्तसंयोगपरम्परावदर्थकः । ज्येष्ठोऽधिकक्षणवान् । कनिष्ठो न्यूनक्षणवान् ।

आद्येति । आद्यं पतनं तस्यासमवायिकारणमसमवायिकारणतावत् । असमवायिकारणत्वान्वयि निरूपितत्वं षष्ठ्यर्थः । पतनपदस्याद्यपतननिरूपिते लक्षणा । आद्यत्वं प्राथम्यं प्रथमोत्पन्नत्वम् । तच्च लाघवात् पतनध्वंसासमानकालिकत्वम् । प्रकृताद्यपतनात् पूर्वमपि कुत्रापि पतनस्य जनिध्रौव्यादिदमसम्भवीति पतने स्वसमानाधिकरणेति विशेषणं देयम् । नन्वेकमेव वस्तु प्रथमतः पतितं पुनरुत्क्षिप्तं पुनः पतति । तत्र द्वितीयवारपतनक्रियास्वप्याद्यपतनमस्तीति वक्तव्यम् । तत्रेदं स्वसमानाधिकरण-

**तत् द्विविधम् , सांसिद्धिकं नैमित्तिकं चेति । सांसिद्धिकं जले ।**

---

पतनध्वंसासमानकालिकत्वं न भवति । तस्य प्रथमवारीयपतनध्वंसकालिकत्वादिति चेन्मा भूदाद्यत्वं । तद्वस्तुनिष्ठगुरुत्वे प्रथमवारीयाद्यपतनमादाय लक्षणं समन्वितमेवेति । अथापि तत्राद्यत्वव्यवहारस्य क्रियमाणतया तदनुगुणं वक्तव्यमिति चेत् स्वसमानाधिकरणपतनध्वंसोत्पत्त्यसमानकालिकत्वमाद्यत्वमित्युच्यताम् । द्वितीयवारीयाद्यपतनमपि न प्रथमवारीयपतनध्वंसोत्पत्तिकालिकम् । तद्ध्वंसानां प्रागेवोत्पन्नत्वादिति । द्वितीयादिपतनं प्रति वेगोऽसमवायिकारणम् । तत्रातिव्याप्तिरित्याद्येति । द्रवत्वेऽतिव्याप्तिवारणाय **पतनेति** । प्रस्तरादौ समवायिकारणेऽतिव्याप्तिरित्यसमवायीति । पतनमधोदेशसंयोगानुकूलक्रिया । **स्यन्दनं** निम्नदेशसंयोगानुकूलक्रिया । **सांसिद्धिकमिति** संसिद्धौ भवं सांसिद्धिकम् । संसिद्धिस्स्वभाव आश्रयसत्ता । भवं सत्तावत् । सप्तम्यर्थः प्रयोज्यत्वम् । प्रत्ययार्थैकदेशसत्तायां संसिद्धेः प्रयोज्यतासम्बन्धेनान्वयः । आश्रयसत्ताप्रयोज्यसत्तावत् । आश्रयसत्तामात्रप्रयोज्यसत्ताकम् । अग्निसंयोगानधीनमिति यावत् । **नैमित्तिकमिति** । **निमित्तमवयवगुणातिरिक्तासमवायिकारणम्** । घटपटादौ दहनतपनादौ च द्रवत्वादर्शनात्स्थलं विशिष्य दर्शयंस्तत्रासाधारणकारणमपि विशिष्य निर्दिशति **पृथिव्यामित्यादिना** । पृथिव्यामिति सप्तम्यर्थो घटकत्वं घृताद्यन्वयि । पृथिव्यामित्यस्य घृतादाविति विशेषणं वा । तदा सप्तम्यर्थ आधेयत्वं द्रवत्वान्वयि । घृतमादिर्यस्याः सा । आदिना जतुप्रभृतिपरिग्रहः । घृततद्भिन्नाभिन्नपृथिवीनिरूपिताधेयतावत् द्रवत्वमग्निप्रतियोगिकसंयोगनिरूपिताभिन्नजन्यतावत् । संयोगपदेऽग्निप्रतियोगिकसंयोगनिरूपिते लक्षणा । पृथिव्यां द्रवत्वं घृतादिवृत्ति अग्निसंयोगजं चेत्यर्थेऽनेकविधानाद्वाक्यभेदस्स्यात् । 'घृतादावग्निसंयोगजं द्रवत्वं पृथिवीवृत्ति' 'पृथिवीवृत्तिद्रवत्वं घृताद्यग्निसंयोगजन्य'मित्येवमपि सुवचम् । अथापि घृता-

**नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् । तेजसि सुवर्णादौ ।**

**चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः ।**

दिः पृथिवीति स्पष्टप्रतिपत्तिः पूर्वरीतौ । अग्निसंयोगजद्रवत्वं घृतादिपृथिवीवृत्तीत्यन्वये तु तादृशद्रवत्वसामान्यस्योद्देश्यत्वं न भवतीति विशेषस्यैवोद्देश्यत्वं स्वीकर्तव्यम् । **सुवर्णादाविति** । **द्रवत्वमग्निसंयोगज**मित्यनुषज्यते । आदिना रजतादिग्रहणम् । अत्र 'सर्पिर्जतुमधूच्छिष्टानां * पार्थिवानामग्निसंयोगात् द्रवत्वमद्भिः सामान्यम्', 'त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगात् द्रवत्वमद्भिः सामान्यम्' इति सूत्रे अनुसन्धेये ।

**चूर्णेति** । आदिना गुडपरिग्रहः । अपिण्डस्य पिण्डस्य भावः पिण्डीभावः । **अपिण्डस्य** पूर्वकालिकपिण्डत्वाभाववतः । पिण्डशब्दो विलक्षणसंयोगविशिष्टवाची । **भावस्सत्ता** । अपिण्डाभिन्नपिण्डवृत्तिसत्तेति विग्रहार्थः । समासे च्विप्रत्ययार्थः समभिव्याहृतपदार्थतावच्छेदकपिण्डत्वादिधर्मः । तत्र पिण्डपदार्थस्याधेयत्वपूर्वकालावच्छिन्नस्वनिष्ठाभावप्रतियोगित्वोभयसम्बन्धेनान्वयः । च्विप्रत्ययार्थपिण्डत्वस्य भावपदार्थे सत्तायां सामानाधिकरण्यसम्बन्धेन । तथा च पिण्डनिरूपिता या पूर्वकालावच्छिन्नाभावप्रतियोगित्वविशिष्टाधेयता तद्वद्धर्मविशिष्टसत्तेति पिण्डीभावशब्दार्थः । प्रकृते विलक्षणसंयोग इत्येतावदेव विवक्षितम् । तस्य हेतुः कारणतावान् । समासे पिण्डीभावशब्दे चूर्णतद्भिन्नवृत्तिविलक्षणसंयोगनिरूपितेत्यर्थलक्षणा । अभेदेन कारणतायामन्वयः । स्नेहो जले वर्तमानः स्वाश्रयसंयुक्तत्वसम्बन्धेन चूर्णादौ सम्बद्धय तत्र समवायेन विलक्षणसंयोगमुत्पादयतीति तदसाधारणं निमित्तकारणम् । चूर्णादीति न लक्षणघटकम् । किं तु पिण्डीभावः कस्येत्यत्र सम्बन्धिप्रदर्शनार्थम् । विलक्षणसंयोगत्वावच्छिन्नकार्यतानिरूपि-

* **अस्मदीये वैशेषिकदर्शनविमर्शे इदं द्रष्टव्यम् ।**

**श्रोत्रग्राह्यो गुणः शब्दः । स द्विविधः , ध्वन्यात्मको वर्णात्मकश्चेति । ध्वन्यात्मको भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः ।**

**सर्वव्यवहारहेतुः ज्ञानं बुद्धिः । सा द्विविधा, स्मृतिरनुभवश्चेति ।**

---

तकारणतावत्त्वे सति गुणत्वं लक्षणम् । चूर्णादावतिव्याप्तिवारकं गुणत्वम् ।

**ध्वनी**ति । ध्वनिरात्मा यस्य । आत्मा स्वरूपमसाधारणधर्मविशिष्टव्यक्तिः । षष्ठ्यर्थ आधेयत्वं धर्मेऽन्वेति । समास आत्मशब्दस्य ध्वनित्वविशिष्टे लक्षणा । भेर्यादाविति सप्तम्यर्थोऽवच्छेद्यत्वम् । भेरीतद्भिन्ननिरूपिताधेयतावान् ध्वनित्वविशिष्टाभिन्नशब्दः । भेर्याद्यवच्छेदेन हि ध्वनिराकाशे जायते । **संस्कृते**ति । आदिना संस्कृतभाषाव्यतिरिक्तानां सर्वासामपभ्रंशभाषाणां ग्रहणम् । संस्कृतभाषादिषु रूपं यस्येति विग्रहः । भाषा हि ज्ञानजनकवर्णसमुदायः । तद्घटकं वर्णस्वरूपमिति । **सर्वे**ति । सर्वश्चासौ व्यवहारश्च तस्य हेतुः । सर्वत्वं समभिव्याहृतपदार्थतावच्छेदकव्यापकं बुद्धिविशेषविषयत्वम् । तत्पर्याप्त्यधिकरणं सर्वशब्दार्थः । व्यवहारपदस्य तादृशबुद्धिविशेषविषयतापर्याप्त्यधिकरणव्यवहारनिरूपितेति लक्ष्यार्थोऽभेदेन हेतुत्वेऽन्वेति । तादृशहेतुत्ववदभिन्ना ज्ञानाभिन्ना बुद्धिरिति बोधः । ननु संख्यादीनामपि यत्किञ्चिद्व्यवहारहेतुत्वस्य प्रागुक्तत्वात्तत्रातिव्याप्तिवारणाय सर्वपदमिति वक्तव्यम् । नैतच्छक्यम् । अत्र हि हेतुत्वं जनकत्वमेव, न तु जनकज्ञानविषयत्वम् । ज्ञानस्य साक्षादेव कारणत्वात् । संख्यादीनां च न साक्षाज्जनकत्वमिति । तत्कुतःसर्वपदमिति चेत् सत्यम् । संख्यापरिमाणादिलक्षणे व्यवहारविशेषणतया संख्या मानेत्यादि निवेशनीयमासीत् । अन्यथाऽतिव्याप्तेः । तद्वदत्र किमपि विशेषणं व्यवहारे न देयम् । अस्यैतद्व्यवहारं प्रत्येव कारणत्वं न त्वन्यव्यवहारं प्रतीत्यस्याभावाद्व्यवहारसामान्यकारणत्वादिति बोधनार्थमेव सर्वेत्युक्तम् । अतो व्य-

**संस्कारमात्रजन्यं ज्ञानं स्मृतिः ।**
**तद्भिन्नं ज्ञानं अनुभवः । स द्विविधः, यथार्थोऽयथार्थश्च ।**

वहारहेतुत्वमेव लक्षणम् । अदृष्टेऽतिव्याप्तिवारणाय व्यवहारत्वावच्छिन्न-कार्यतानिरूपितकारणतावत्त्वमिति निष्कर्षः । ज्ञानमिति पर्यायपदं बुद्धि-शब्देनान्तःकरणादि विवक्षितमिति भ्रमव्युदासाय ।

**संस्कारे**ति । संस्कारबाहिरिन्द्रियमध्ये संस्कारमात्रजन्यं ज्ञानं स्मृतिरिति वक्त्रभिप्रायः । अतो मात्रपदं संस्कारबाहिरिन्द्रियमध्यघटकवृत्ति यत् स्मृतिनिष्ठजन्यतानिरूपकत्वं तद्व्यापकत्वार्थकम् । व्यापकत्वमभेदसम्बन्धेन । तस्याश्रयः संस्कारः । तथा च समासे मात्रपदं संस्कारबाहिरिन्द्रियमध्यघट-कवृत्ति-स्मृतिनिष्ठजन्यतानिरूपकत्वव्यापकसंस्कारनिरूपितार्थकम् । तस्य जन्यतायामभेदेनान्वयः । तथा च बहिरिन्द्रियाजन्यत्वे सति संस्कारज-न्यत्वे सति ज्ञानत्वं लक्षणं फलितम् । सेयं गौरित्यादिप्रत्यभिज्ञायां, अनु-मित्यादौ, संस्कारध्वंसे चातिव्याप्तिवारणाय क्रमेण दलानि । स्मृतेरपि मनो-जन्यत्वादसम्भवः स्यादिति बहिरिति । अत एव संस्कारेतराजन्यत्वे सतीति सामान्यरूपेण नोक्तम् । ननु सोऽयमहमिति मानसप्रत्यभिज्ञाप्रत्यक्षेऽति-व्याप्तिः । अस्य स इत्यंशे संस्कारजन्यत्वात्, अन्यांशस्य चात्मादेर्बहिरिन्द्रि-याग्राह्यतया बहिरिन्द्रियाजन्यत्वात् । न चास्य स्मृतित्वमिष्टमिति वाच्य-म् । तथा सति तुल्यन्यायेन सेयं गौरित्यस्यापि स्मृतित्वस्येष्टव्यतया प्रथम-दलं नापेक्षितमिति मात्रपदवैयर्थ्यात् । न च प्रत्यभिज्ञायामंशत एव स्मृ-तित्वमस्ति, अंशान्तरे त्वन्यथेति तत्त्वबोधनाय मात्रपदम् । न तु लक्षणे किञ्चिन्निवेशनीयमिति वाच्यम् । तथा सति स्मृतिभिन्नं ज्ञानमनुभव इत्य-नुभवलक्षणस्य तत्राव्याप्त्यापत्तेः । तत्रानुभवत्वस्येष्टत्वादिति चेत् लौकिक-विषयताशून्यत्वे सति संस्कारजन्यत्वे सति ज्ञानत्वं स्मृतिलक्षणम् । एतत्सू-चनाय मात्रपदमिति दिक् । तद्भिन्नम् स्मृतिभिन्नं संस्कारमात्रजन्यभि-

**तद्वति तत्प्रकारकानुभवो यथार्थः । सैव प्रमेत्युच्यते । यथा रजते इदं रजतमिति ।**

---

न्नम् । तस्माद्भिन्नमिति पञ्चम्यर्थोऽनुयोगित्वं भेदेऽन्वेति । तच्छब्दस्य संस्कारमात्रजन्यानुयोगिनि लक्षणा । क्तप्रत्ययार्थ आश्रयतावत् । तद्भिन्नत्वं घटादावपि, ज्ञानत्वं स्मृतावपीति दलद्वयम् ।

यथाभूतोऽर्थो यस्मिन्ननुभवे स यथार्थः । यथाभूत इत्यस्य प्रकार-विशिष्ट इत्यर्थः । अयथेत्यस्य प्रकारशून्य इत्यर्थः । प्रकारविशिष्टवस्तु-विषयको यथार्थः प्रकारशून्यवस्तुविषयकोऽयथार्थ इत्युक्तं भवति । इद-मनुसृत्य तयोर्लक्षणं स्मृतिव्यावर्तकदलघटितमाह तद्वतीत्यादिना । सो-ऽस्यास्तीति तद्वान् । मतुबर्थः सम्बन्धी । सम्बन्धे तच्छब्दार्थः स्वप्रतियोगि-त्वसम्बन्धेनान्वेति । विशेष्यित्वं च सप्तम्यर्थ आश्रयतासम्बन्धेनानुभवे । स प्रकारो यस्य स तत्प्रकारकः । प्रकारः प्रकारतावान् । षष्ठ्यर्थो निरूपि-तत्वं प्रकारतान्वयि । प्रकारशब्दस्य समासे तन्निष्ठप्रकारतानिरूपके लक्ष-णा । यथार्थः यथार्थशब्दवाच्यः । तथा च तत्प्रतियोगिकसम्बन्धवन्नि-रूपितविशेष्यिताविशिष्ट-तन्निष्ठप्रकारतानिरूपकानुभवाभिन्नो यथार्थशब्दवा-च्याभिन्न इति बोधः । रजते इन्द्रियसन्निकर्षे सति 'इदं रजत'मिति यो-ऽनुभवः स यथार्थः । तत्र रजतत्वं प्रकारः तत्सम्बन्धि रजतं विशेष्यमि-ति, विशेष्यता रजतनिष्ठा । तन्निष्ठविशेष्यतानिरूपितविशेष्यिता ज्ञानेऽ-स्ति । प्रकारता रजतत्वनिष्ठा । तादृशप्रकारतानिरूपितप्रकारिताऽपि ज्ञान इति तादृशप्रकारतानिरूपकत्वमपि तत्रेति लक्षणसमन्वयः । इदं रजतमित्यनुभवानन्तरं या कदाचित् 'तद्रजत'मिति यथार्थस्मृतिस्तत्राति-व्याप्तिवारणायानुभवत्वनिवेशः । तद्वतीत्यनिवेशे किञ्चित्प्रकारकत्वे सत्य-नुभवत्वमित्युक्तं भवति । इदमयथार्थानुभवेऽप्यस्ति , तत्रापि कस्यचि-त्प्रकारत्वात् । अतस्तद्वतीत्युक्तम् । किञ्चिद्विशेष्यकत्वमात्रोक्तावपि तत्रैवा-

तिव्याप्तिः तद्ज्ञानविशेष्ये शुक्त्यादावपि कस्यचिद्धर्मस्य वर्तमानत्वात् । अतस्तत्प्रकारकेत्युक्तम् । किञ्चिद्वति किञ्चित्प्रकारक इत्युक्तावपि तत्रातिव्याप्तिरेव । तस्य शुक्तित्वरूपकिञ्चिद्वति रजतत्वरूपकिञ्चित्प्रकारकत्वात् । अतः प्रथमकिञ्चित्पदेन यत् गृह्यते तदेव द्वितीयकिञ्चित्पदेन ग्राह्यमिति ज्ञापनायोभयत्र तच्छब्दप्रयोगः । नन्वेवमपि कदाचिद्रजते शुक्तौ चेन्द्रियसन्निकर्षे सति 'इमे शुक्तिरजते' इति विपरीतज्ञानमुदेति, तत्र ज्ञानेऽतिव्याप्तिः, रजतत्वप्रकारकत्वस्य रजतत्ववद्विशेष्यकत्वस्य च सत्त्वादिति चेदुच्यते । अत्र हि विपरीतज्ञाने रजतांशे शुक्तित्वं प्रकारः , शुक्त्यंशे च रजतत्वम् । अतो रजतत्ववन्निष्ठविशेष्यतानिरूपिता शुक्तित्वनिष्ठप्रकारतैव । शुक्तित्ववन्निष्ठविशेष्यतानिरूपिता च रजतत्वनिष्ठप्रकारतैव । अतो रजतत्वनिष्ठप्रकारतानिरूपकत्वस्य शुक्तित्ववद्विशेष्यकत्वस्य चावच्छेद्यावच्छेदकभावः । ययोर्विषयतयोर्निरूप्यनिरूपकभावस्तन्निरूपितविषयितयोरवच्छेद्यावच्छेदकभाव इत्यङ्गीकारात् । एवं शुक्तित्वनिष्ठप्रकारतानिरूपकत्वस्य रजतत्ववद्विशेष्यकत्वस्य चावच्छेद्यावच्छेदकभावः । अतो रजतत्ववन्निरूपितविशेष्यित्वावच्छिन्ना रजतत्वनिष्ठप्रकारतानिरूपकता तत्र नास्ति । प्रकृते च तद्वति तत्प्रकारक इत्यनेन तद्वन्निरूपितविशेष्यित्वावच्छिन्नतन्निष्ठप्रकारतानिरूपकताशालित्वे सत्यनुभवत्वमिति लक्षणं विवक्षितम् । अतो न दोषः । सैवेत्येवकारेणायथार्थानुभवव्यवच्छेदः । अथ वा तद्वति तत्प्रकारकत्वेनानुभवसजातीयायथार्थस्मृतिर्व्यवच्छिद्यते । स्मृतेर्यथार्थत्वेऽपि न प्रमात्वमङ्गीक्रियत इति । सा यथार्थानुभवः । इतिशब्दस्यानुपूर्वीरूपप्रकारोऽर्थः । प्रमापदं प्रमाशब्दार्थकम् । तस्यानुपूर्व्यामाधेयतासम्बन्धेनान्वयः । उच्यत इति धात्वर्थो ज्ञानजनकशब्दः । तत्रेतिशब्दार्थस्याश्रयतासम्बन्धेनान्वयः । तस्य कर्मप्रत्ययार्थे फले । तस्याश्रयतया सेतिपदार्थे । अथ वा प्रमेति

**तदभाववति तत्प्रकारकानुभवोऽयथार्थः, स एव भ्रम इत्युच्यते, यथा शुक्तौ इदं रजतमिति ।**

**यथार्थानुभवश्चतुर्विधः, प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । तत्करणमपि चतुर्विधम्, प्रत्यक्षानुमानोपमानशब्दभेदात् ।**

---

प्रमातिपदेन उच्यते शक्त्योपस्थाप्यत इत्यर्थः । ननु सति स्त्रीलिङ्गनिर्देशः कथं? पूर्वं पुल्लिङ्गनिर्देशात् । न च 'शैत्यं हि यत् सा प्रकृतिर्जलस्य' इति पूर्वं नपुंसकनिर्दिष्टमपि स्त्रीलिङ्गशब्देन परामृश्यते, कुतः? विधेयप्राधान्यात् । तद्वदिहापीति वाच्यम् । अत्र प्रमाशब्दार्थस्य विधेयत्वाभावात् । प्रमेत्युच्यत इति उच्यमानत्वं ह्यत्र विधेयम् । तत्कथं स्त्रीलिङ्गमिति । सत्यम्; उच्यमानत्वस्य विधेयत्वेऽप्यन्ततः प्रमात्वविधान एव पर्यवसानमिति तदनुरोधेन तथेति । यद्वा 'सैव प्रमा' इति इतीदं उच्यत इत्यर्थः । अत्र इतिशब्द आनुपूर्व्यवच्छिन्नशब्दप्रतिपाद्यार्थपरः । सैव प्रमेति वर्णसमुदायस्याधेयतासम्बन्धेनानुपूर्व्यामन्वयः । ईदृशवर्णसमुदायनिष्ठानुपूर्व्यवच्छिन्नशब्दप्रतिपाद्यार्थ उच्यते तार्किकैः कथ्यत इति वाक्यार्थः । एवं च सेत्यत्र प्रमाशब्दार्थ एव विधेय इति न स्त्रीलिङ्गानुपपत्तिः ।

**तदभाववति** तस्याभावस्तद्वति । षष्ठ्या अनुयोगित्वमर्थः । समासे तच्छब्दे प्रकृतप्रकारानुयोगिनि लक्षणा । अभेदेनाभावेऽन्वेति । तदभावाश्रयनिरूपितविशेष्यित्वावच्छिन्नतन्निष्ठप्रकारतानिरूपकत्वविशिष्टानुभवत्वमयथार्थानुभवलक्षणम् । शुक्ताविन्द्रियसन्निकर्षे यो विपरीतानुभव इदं रजतमिति, सोऽयथार्थः । अयथार्थस्मृतावतिव्याप्तिवारणायानुभवत्वम् । शिष्टं यथार्थानुभववारणाय । रङ्गरजतयोरिन्द्रियसन्निकर्षे सति जायमाने इमे रङ्गरजते इति यथार्थानुभवेऽतिव्याप्तिवारणायावच्छिन्नत्वघटितपरिष्कारः । शाब्देति । शाब्दत्वं शब्दजन्यबोधमात्रवृत्तिजातिविशेषः । तत्करणं करणं । करणतावत् । तच्छब्दो यथार्थानुभववाची यथार्थानुभवनिरूपित-

**असाधारणकारणं करणम् ।**

लाक्षणिकः । **अपिशब्दः** यथार्थानुभवसमुच्चये । तत्करणमित्यत्र करणशब्दार्थः क इत्यत्राहासाधारणेति । **साधारणं** तत्सम्बन्धित्वे सति तदन्यसम्बन्धि । सम्बन्धश्च प्रकृते प्रमायाः करणमित्यत्र प्रमायाः करणत्वे निरूपितत्वसम्बन्धेनान्वयात् निरूपितत्वरूपः । अतः साधारणपदं प्रकृते प्रकृतकार्यभिन्नकार्यनिरूपितार्थकम् । **असाधारणं** प्रकृतकार्यभिन्नकार्यानिरूपितम् । अस्य कारणपदार्थैकदेशकारणतायामन्वयः । **करण**मित्यस्य प्रकृतकरणशब्दवाच्यमित्यर्थः । एवञ्च तत्तत्कार्यभिन्नकार्यानिरूपितकारणतावत् तत्र तत्र करणमिति भावः । इदमत्राकूतम् । केचिद्व्यापारवदसाधारणकारणं करणम्, यथा घटं प्रति दण्डः । तत्र दण्डेन घटे जननीये मध्ये भ्रमणं हि व्यापार इत्याहुः । अनेन तादृशकारणे करणशब्दप्रयोगः सिद्धः । अन्ये तु, यदव्यवहितोत्तरक्षणे कार्यं भवति तत्करणम् । यथा कपालद्वयसंयोगो घटं प्रतीत्याहुः । अनेन व्यापारेऽपि करणशब्दप्रयोगः सिद्धः । दण्डभ्रमणादिकमपि चक्रभ्रमणमृत्पिण्डभ्रमणतदीयसंयोगविशेषादिकं क्रमेणोत्पादयत् व्यापारवत् कारणमेव । अतोऽस्माभिरुभयत्र करणशब्दप्रयोगस्य प्रामाणिकत्वं स्वीकृत्योभयानुगतलक्षणवर्णनमेवोचितम् । तच्च लक्षणमसाधारणकारणत्वम् । कालादृष्टादिकं तु साधारणत्वान्न करणम् । ननु प्रमातुः प्रमेयस्य च प्रमाणत्वं स्यादिति चेत् तदेतद्व्यापारवत्कारणं करणमिति मतेऽपि तुल्यम् । तयोर्मनःसंयोगेन्द्रियसंयोगद्वारा कारणत्वात् । अतो व्यापारस्य व्यापारवतश्च करणत्वमिष्टमिति । अत एव ग्रन्थकार इन्द्रिये प्रत्यक्षकरणत्वं लिङ्गपरामर्शस्यानुमितिकरणत्वं च वक्ष्यति । दर्शयिष्यति चानुमानदीपिकायां, 'व्यापारवदसाधारणकारणं करणमिति मते' इति निर्देशेन मूले तस्यानभिमतत्वम् । 'तदेतत्त्रिविधकारणमध्ये यदसाधारणकारणं तदेव करण' मित्युपरि वा-

**कार्यनियतपूर्ववृत्ति कारणम् । यथा, घटादिकं प्रति दण्डादिः । कार्यं प्रागभावप्रतियोगि ।**

---

कथमपि करणत्वस्य सव्यापारनिर्व्यापारसाधारण्यं व्यनक्ति ।

करणपदार्थघटकः कारणपदार्थः क इत्यत्राह कार्येति । नियतं व्यापकम् । पूर्वा वृत्तिर्यस्य तत् । षष्ठ्यर्थं आधेयत्वम् । पूर्वा पूर्वकालनिरूपिता यन्निष्ठाधेयता पूर्वकालनिरूपिताभिन्ना । पूर्वकालनिरूपिताधेयतावदिति समासार्थः । नियतं च तत्पूर्ववृत्ति च । कार्यस्य नियतपूर्ववृत्ति । षष्ठ्यर्थो निरूपितत्वं व्यापकत्वे पूर्वत्वे चान्वेति । कार्यनिरूपिताभिन्नव्यापकत्वाश्रय,कार्यनिरूपिताभिन्नपूर्वत्वाश्रयकालनिरूपिताधेयतावत् कारणशब्दवाच्यमिति बोधः । कार्यव्यापकत्वे सति कार्यपूर्वकालवृत्तित्वं कारणत्वम् । यत् प्रकृतकार्योत्पत्तिस्थले सर्वत्रास्ति कार्योत्पत्तिप्राक्काले , तत् प्रकृतकार्यकारणम् । यत्प्रति कारणत्वं वक्तव्यम् तद्वस्तुपरिचायकं कार्यपदम् । न तु लक्षणे निवेश्यम् । स्वस्यापि स्वव्यापकत्वात् स्वं प्रति कारणत्वापत्तिरित्युत्तरदलम् । घटपूर्ववृत्तौ रासभे घटकारणत्ववारणाय पूर्वदलम् । ननु दण्डत्वदण्डरूपादीनां घटं प्रति कारणत्वापत्तिः , नियतपूर्ववृत्तित्वादिति चेत् तत्तद्भिन्नत्वनिवेशेन तत्तद्वारणीयम् । इदमेवानन्यथासिद्धत्वमिति ध्येयम् । कारणशब्दार्थनिरूपणे निर्दिष्टं कार्यं नाम किमित्यत्राह कार्यमिति । प्रागभावस्य प्रतियोगि । षष्ठ्यर्थो निरूपितत्वं प्रतियोगित्वान्वयि । यत् प्रागभूत्वा पश्चाद्भवति तत्कार्यम् । अयं भावः—कारणलक्षणे पूर्ववृत्तीत्यस्य प्रागभावाधिकरणकालवृत्तीत्यर्थः । तत्र प्रागभावपदेन यत्प्रागभावो गृह्यते तत् कार्यम् । तत्प्रागभावाधिकरणकालवृत्ति सत् यत् तन्नियतं तत्कारणमिति ।

एवं कारणं लक्षयित्वा 'प्रतिकार्यं कारणं वा करणं वा नैकमेव किं

**कारणं त्रिविधम्, समवाय्यसमवायिनिमित्तभेदात् ।** यत्स-

---

तु यथासम्भवमनेक' मिति व्युत्पादनाय तद्विभजते **कारण**मिति । **सम-वाय्यसमवायिनिमित्तभेदात्** समवायिकारणासमवायिकारणनिमित्तकारणभेदात् । आद्यं निर्वक्ति **यदि**ति । यस्मिन् समवेतम् । समवेतं समवायप्रतियोगि । सप्तम्यर्थ आधेयत्वं । तदाधेयत्वम् च तदनुयोगिकत्वम् । उत्पूर्वक पद्‌ल् धातोर्जन्यत्वमाख्यातस्याश्रयत्वमर्थः । यदनुयोगिकसमवायप्रतियोग्यभिन्नं कार्यं जन्यतानिरूपिताश्रयत्वाश्रय इति बोधः । यच्छब्दघटितवाक्यात् यच्छब्दार्थे यादृशवाक्यार्थसम्बन्धोऽवगम्यते तादृशवाक्यार्थसम्बन्धविशिष्टयच्छब्दार्थ एव तच्छब्दात्स्वरसतः प्रतीयते । यथा पीतमम्बरं यस्य स इत्युक्तौ स इत्यतः पीतरूपाम्बरविशिष्ट इत्यर्थः प्रतीयते । अत इह तच्छब्द उत्पद्यमानकार्यप्रतियोगिकसमवायानुयोगीत्यर्थकः । तत् समवायिकारणशब्दवाच्यम् । अत्रेदं बोध्यम्— समवायिकारणपदस्य समवायि च तत्कारणं चेति विग्रहः । समवायानुयोगि सत् कारणम् समवायिकारणम् । घटस्य समवायिकारणमित्युक्तौ घटपदार्थस्य समवाये कारणत्वे चान्वयात् घटप्रतियोगिकसमवायानुयोगि सत् घटकारणमित्यर्थो लभ्यते । इत्थं च तत्समवायानुयोगित्वे सति तत्कारणत्वं तत्समवायिकारणत्वमित्युक्तं भवति । असमवायिकारणादेरपि समवायिकारणत्वापत्तिरिति प्रथमदलम् । परमाण्वेकत्वं प्रति परमाणोः कारणत्वापत्तिरिति द्वितीयम् । एवञ्च गुणादौ 'अयमस्य समवायिकारण' मिति विशेषव्यवहारस्य नापत्तिः । अर्थानन्वयात् । अथापि सामान्यतो गुणः समवायिकारणमिति व्यवहारापत्तिः ; गुणस्यापि रूपादे रूपत्वादिजातिसमवायानुयोगित्वात् घटरूपादिकं प्रति कारणत्वाच्च । अतः कार्यसमवायानुयोगि सत् कारणं समवायिकारणशब्दार्थ इति वक्तव्यम् । एवञ्च का-

**मवेतं कार्यमुत्पद्यते तत् समवायिकारणम्, यथा, तन्तवः पटस्य,**

रणमिति व्यर्थम् । तथा च कार्यसमवायानुयोगित्वमेव समवायिकारणत्वमिति 'यत् समवेतं कार्यं तत् समवायिकारण' मित्येतावदेवालमिति मूले उत्पद्यत इति पदं व्यर्थमित्याशंक्येत—अत्रोच्यते । कारणताविशेषस्य समवायिकारणत्वस्य कारणताघटितत्वं युक्तम् । समवायिकारणमिति पदाच्च कारणत्वं स्फुटं प्रतीयते । अतः कारणत्वघटित एव तदर्थः, न त्वघटितः कार्यसमवायानुयोगीत्यर्थः । तत्र चार्थे समवायीति पदलब्धसमवायसम्बन्धोऽपि घटनीयः । एवञ्च समवायसम्बन्धावच्छिन्नकार्यतानिरूपितकारणतावदित्यर्थो वक्तव्यः सिद्ध्यति । एतल्लाभायोत्पद्यत इत्युक्तम् । लाभप्रकारश्चायम्—यत्समवेतं कार्यमुत्पद्यत इत्यस्य कार्यं यत्समवेतं सदुत्पद्यते इत्यर्थः । तत्र यत्समवेतत्वविशिष्टकार्यमित्युद्दिश्य जन्यत्वं विधीयते । उद्देश्यतावच्छेदकं यत्समवेतत्वपदबोध्यम् । उद्देश्यविधेयभावस्थले चासति बाधक उद्देश्यतावच्छेदकावच्छिन्नत्वं विधेये भासत इति नियमः । अतोऽत्र विधेयभूतजन्यतायां समवेतत्वावच्छिन्नत्वं भासते । समवेतत्वावच्छिन्नत्वं च समवायप्रतियोगित्वावच्छिन्नत्वं समवायसम्बन्धावच्छिन्नत्वमेव । तथा च समवायसम्बन्धावच्छिन्नकार्यतानिरूपितकारणतावत्त्वमिति सिद्धम् । यद्यपीदमसमवायिकारणेऽतिव्याप्तम् । अथापि कारणतायां तादात्म्यसम्बन्धावच्छिन्नत्वनिवेशान्न दोषः । कार्यतायां समवायसम्बन्धावच्छिन्नत्वनिवेशप्रयोजनं तु, प्रत्यक्षे विषयस्य घटादेः कारणतया तत्र तस्य समवायिकारणत्वापत्तिः विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्यसम्बन्धेनैव विषयस्य कारणत्वादिति तद्वारणमेव । एवं सर्वसम्मतसमवायिकारणलक्षणसिद्धिरिति । यथेत्यस्योदाहरणं लक्ष्यप्रदर्शनमर्थो विषयतासम्बन्धेन तन्तुष्वन्वेति । पटस्येति समवायिकारणमिति शेषः । निरूपितत्वं षष्ठ्यर्थः समवायि-

**पटश्च स्वगतरूपादेः ।**
**कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणं असमवायिकारणम् , यथा तन्तुसंयोगः पटस्य तन्तुरूपं पटगतरूपस्य च ।**

---

कारणत्वेऽन्वेति । यद्वा **यथा** यत्प्रकारविशिष्टम् । पटसमवायिकारणभूतास्तन्तव उक्तसमवायिकारणलक्षणरूपप्रकारविशिष्टा इत्यर्थः । रूपादेरित्यादिना क्रियादिपरिग्रहः ।

असमवायीत्यस्य न समवायि असमवायीति विग्रहः । समवायीत्यस्य हि समवायानुयोगीत्यर्थः तद्भिन्नमसमवायि समवायप्रतियोगि । समवेतं कारणमसमवायिकारणमिति लब्धम् । तत्र च कुत्र समवेतमित्याकांक्षायां कार्ये समवेतमिति तावद्वक्तुं न शक्यते, कार्ये समवेतस्य कार्योत्पत्त्यनन्तरभावितया कार्यं प्रति कारणत्वासम्भवात् । अत औचित्यात् कार्यकारणे तत्कारणे वा समवेतं कारणमसमवायिकारणमिति वक्तव्यमित्यभिसन्धाय तल्लक्षणमाह **कार्येणे**ति । अत्र सहेत्यस्य समवेतमित्यत्र धात्वर्थे समवायेऽन्वयात्समवायाधिकरणमित्यर्थः । तृतीयार्थः प्रतियोगितानिरूपकत्वं सहशब्दार्थघटकसमवायेऽन्वेति । वाशब्दस्य स्वसमभिव्याहृतपदार्थस्य यत्रान्वयस्तन्निष्ठोऽभावोऽर्थः । प्रकृते समभिव्याहृतस्य कार्येणेत्यस्य सहशब्दार्थैकदेशे समवायेऽन्वयात् समवायनिष्ठाऽभावो वाशब्दार्थः । तस्य प्रतियोगितासम्बन्धेन कार्येण कारणेनेति तृतीयार्थयोरन्वयः । तथा च समवायनिष्ठाभावप्रतियोगि यत् कार्यप्रतियोगिकत्वं यच्च समवायनिष्ठाभावप्रतियोगि कारणप्रतियोगिकत्वम् , तद्विशिष्टसमवायाधिकरणेति सहान्तार्थः । सहशब्दार्थाधिकरणस्य स्वानुयोगिकत्वसम्बन्धेन समवेतमित्यत्र समवायेऽन्वयः । अर्थ इति सप्तम्यर्थश्चानुयोगितानिरूपकत्वं तत्रैवान्वेति । सदित्यस्यासाधारणधर्माविशिष्टमि-

त्यर्थः । समवेतपदार्थस्यासाधारणधर्मे आधेयतासम्बन्धेनान्वयः । समवेतनिष्ठासाधारणधर्मश्च समवेतत्वमेव । तथा च प्रकृतवाक्यप्रतिपाद्यो यादृशः सहशब्दार्थघटकसमवायस्तन्निष्ठाभावप्रतियोगिकार्यप्रतियोगिकत्व-विशिष्ट-तादृशसमवायनिष्ठाभावप्रतियोगिकारणप्रतियोगिकत्वविशिष्टसमवाया-धिकरणानुयोगिक- एकाभिन्नार्थानुयोगिक-समवायप्रतियोगिनिष्ठासाधारणधर्म-विशिष्टाभिन्नकारणमसमवायिकारणमिति वाक्यार्थः । तन्तुद्वयसंयोगः पटा-समवायिकारणम् । तन्तुरूपं च पटरूपस्य । तत्र कार्येण पटेन सहैकस्मिन्नर्थे तन्तौ समवेतं कारणं तन्तुद्वयसंयोगः । कार्यस्य पटगतरूपस्य कारणेन समवायिकारणेन पटेन सहैकस्मिन्नर्थे तन्तौ समवेतं कारणं तन्तुगतरूपमिति द्विविधमसमवायिकारणम् । तत्र प्रथमे कार्येण सह समवेतत्वमादाय समन्वयात्सहशब्दार्थघटकः समवायः कार्यप्रतियोगि-कः , न तु कारणप्रतियोगिकः । द्वितीये कारणेन सह समवेतत्वमिति स समवायः कारणप्रतियोगिक एव । एवञ्चैकैकसमवायेऽप्यपरप्रतियोगि-कत्वाभावसत्त्वाद्वाशब्दप्रयोगः । अत्र समवेतं सत्कारणमित्यनेन समवेत-त्वविशिष्टे कारणतोक्त्या समवेतत्वावच्छिन्ना कारणतेति लभ्येत । सम-वेतत्वं च समवाय एव । तथा च कार्यसमवायाधिकरणानुयोगिकसमवा-यावच्छिन्ना कार्यसमवायिकारणसमवायाधिकरणानुयोगिकसमवायावच्छिन्ना वा कारणतेति लब्धम् । तत्र च, यत्र कार्यमुत्पद्येत तत्र कारणमस्तीत्य-स्यैव वक्तव्यतया प्रकृते कार्यः पटः समवायेनोत्पद्यते तन्ताविति तत्रैव तन्तुद्वयसंयोग उपपादनीयः । एवं कार्यं पटरूपं पटे उत्पद्यत इति तत्रैव तन्तुरूपमुपपाद्यम् । अतोऽत्र कार्यसमवायाधिकरणत्वान्तं प्रथमदले कार्यसमवायिकारणत्वान्तं द्वितीयदले चोपलक्षणम् । अवशिष्टांशे कारण-तावच्छेदकसम्बन्ध उपलक्षणांशे च समवायरूपकार्यतावच्छेदकसम्बन्धो

दर्शितः । तथा च समवायसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्नकारणत्वमसमवायिकारणत्वमिति फलितम् । अत्र कार्यतावच्छेदकसम्बन्धमात्रनिवेशे समवायिकारणेऽतिव्याप्तिः । कारणतावच्छेदकसम्बन्धमात्रनिवेशे रूपस्य द्रव्यप्रत्यक्षे समवायेन द्रव्यसमवेतप्रत्यक्षे स्वसमवायिसमवेतत्वसम्बन्धेन च कारणतया प्रत्यक्षं प्रति पटरूपादेरसमवायिकारणत्वापत्तिः कारणतावच्छेदकसम्बन्धयोरेकतरनिवेशे चान्यतरस्मिन्नसमवायिकारणेऽतिव्याप्तिरितीत्थं निवेशः । नन्वेवं कार्येण कारणेन वा सह समवेतमित्यनेनैव सर्वसिद्धावेकस्मिन्नर्थ इति व्यर्थमिति चेदुच्यते । सहशब्दार्थोऽधिकरणं कालरूपं वा देशरूपं वा भवति । तत्र कालः प्रकृते न गृह्यत इति स्पष्टप्रतीतये तदुक्तिः । वस्तुतः कार्यप्रतियोगिकसमवायस्य कारणप्रतियोगिकसमवायस्य वाऽधिकरणं यावद्वस्तु भवति तावत्समवेतमेव कारणमिति न । किं तु तत्रैकस्मिन्समवेतमपि कारणम् । यथा हस्तपुस्तकसंयोगः कायपुस्तकसंयोगकारणम् । तत्र कार्यसमवायाधिकरणं कायः पुस्तकं च । हस्तपुस्तकसंयोगरूपं कारणं तु न तावत्समवेतम् । किं तु पुस्तकमात्रे । तथाऽपि तत्कारणमेव । एवं तन्तुरूपाणि पटरूपं प्रति कारणम् । तत्र पटरूपात्मककार्यस्य कारणं पटस्तत्समवायिकारणं बहवस्तन्तवः । तावत्सु समवेतमेकं रूपं नास्ति । एकैकरूपस्यैकैकवृत्तित्वात् । एवं पटीयचित्ररूपकारणस्य तन्तुगतनीलादिविभिन्नरूपस्यापि यावत्तन्त्ववृत्तित्वं द्रष्टव्यम् । तस्मादेकवृत्तित्वेऽप्यसमवायिकारणत्वं भवतीति ज्ञापनायैकस्मिन्नर्थ इत्युक्तम् । एवमेतदुक्त्या काचिदाशङ्काऽपि परिहृता । सा तावत् 'असमवायिकारणत्वं हि समवेतकारणत्वम् । अतः कारणतायां द्विविधासमवायिकारणलक्षणेऽपि समवायसम्बन्धावच्छिन्नत्वमेव निवेश्यताम् । कार्यतायामेव तु समवाय, स्वसम-

**तदुभयभिन्नं कारणं निमित्तकारणम् । यथा तुरीवेमादिकं पटस्य ।**

---

वायिसमवायान्यतरसम्बन्धावच्छिन्नत्वमित्येवंरूपा । परिहारप्रकारश्च—कायपुस्तकसंयोगः समवायेन काये पुस्तके चास्ति । हस्तपुस्तकसंयोगरूपकारणं तु पुस्तक एकस्मिन्नेव न तु कायेऽपि । तथा स एव कायपुस्तकसंयोगःस्वसमवायिसमवायसम्बन्धेन कायावयवेषु हस्तपादादिषु पुस्तकावयवेषु पत्रादिषु चास्ति । हस्तपुस्तकसंयोगस्तु हस्त एकस्मिन्नेवावयवे नान्यत्रेति तस्य कारणत्वं न स्यात् । अत एकस्मिन्नर्थे समवेतस्यापि कारणत्वात्कारणतायामेव सम्बन्धद्वयं पूर्वोक्तरीत्या विवक्षणीयम् । न तु कार्यतायाम् । एवञ्च कायपुस्तकसंयोगः काये पुस्तके च । हस्तपुस्तकसंयोगोऽपि पुस्तके समवायेन, काये स्वसमवायिहस्तसमवेतत्वसम्बन्धेनेति न दोष इति । एवं घटः समवायिसमवायसम्बन्धेन कपालावयवेऽस्ति,तत्र कपालद्वयसंयोगः समवायेन नास्तीत्येवं सर्वत्र व्यभिचारादपि कार्यतायां सम्बन्धभेदं विहाय कारणतायामेव स ग्राह्य इति ध्येयम् । **तन्तुसंयोगः** तन्त्वोः संयोगः । **पटस्येति** । असमवायिकारणमिति शेषः । एवमग्रेऽपि । चस्तन्तुसंयोगसमुच्चये तन्तुरूपस्थे ।

**तदिति** । तयोरुभयं तस्माद्भिन्नम् । घटितत्वं षष्ठ्यर्थः । पञ्चम्यर्थोऽनुयोगित्वं भेदेऽन्वेति । तथा चोभयपदं समवायिकारणप्रतियोगिकासमवायिकारणप्रतियोगिकपरम् । अभेदेन भेदे तदन्वयः । **निमित्तकारणं** निमित्तकारणशब्दवाच्यम् । तथा च समवायिकारणप्रतियोगिकभेदवत्त्वे सत्यसमवायिकारणप्रतियोगिकभेदवत्त्वे सति कारणत्वं निमित्तलक्षणम् । समवायिकारणे, असमवायिकारणे, पारिमाण्डल्यादौ चातिव्याप्तिवारणाय क्रमेण दलनिवेशः । अदृष्टे लक्षणसमन्वयः । उदाहरति **यथेति** ।

**तदेतत्त्रिविधकारणमध्ये यदसाधारणकारणं तदेव करणम् । तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ।**

---

ननु तुर्यादीनां तुर्यादिनिष्ठरूपादिकं प्रति समवायिकारणत्वादिसद्भावात् समवायिकारणभिन्नत्वादिदलाभावादव्याप्तिः । न च समवायिकारणताभिन्नाऽसमवायिकारणताभिन्ना च या कारणता तद्वत्त्वमेव निमित्तकारणत्वम् । अत्रैव ग्रन्थतात्पर्यम् । एवं च यथा तुर्यादौ तत्तद्रूपादिसमवायिकारणता तथा तद्भिन्ना पटादि प्रति कारणताऽप्यस्तीति लक्षणसमन्वय इति वाच्यम् । एवं तर्हि कारणत्वं निमित्तकारणत्वमित्येव सुवचत्वात् क्वचिदप्यतिव्याप्त्यभावादिति चेन्न । कारणत्वमात्रस्य निमित्तलक्षणत्वे परमाणावतिव्याप्तिः तस्य समवायिकारणत्वेऽपि किंचित्प्रति निमित्तकारणत्वाभावात् । एवं जलपरमाणुरूपादावसमवायिकारणेऽतिव्याप्तिः । अतो दलद्वयनिवेशः । किं च निमित्तकारणतास्वरूपं किमिति प्रश्ने समवायिकारणत्वादिभिन्नं कारणत्वमित्येव वक्तव्यम् । अन्यथा समवायिकारणत्वादेरपि निमित्तकारणतास्वरूपत्वप्रसङ्गात् घटं प्रति कपालस्यापि निमित्तकारणत्वापातादिति । तुरीति । तुरीवेमानौ आदी यस्य तत् ।

यस्य करणशब्दार्थस्य निरूपणाय कारणशब्दार्थं सामान्यतो विशेषतश्च निरूपितवान् तं करणशब्दार्थमुपसंहरति तदिति । तेषां सामान्यतो लक्षितानामेतेषां विशेषतो लक्षितानां त्रिविधानां कारणानां मध्ये । घटितत्वं मध्यशब्दार्थः । षष्ठ्यर्थ आधेयत्वम् । निरूपकत्वं सप्तम्यर्थः । घटितत्वस्य निरूपितत्वसम्बन्धेनान्वयः । निरूपकत्वस्य कारणेऽन्वयः । एवं करणशब्दार्थव्युत्पादनेन **तत्करणमपि चतुर्विधमिति** वाक्यस्यार्थमवगमितवान् । तदुपर्येवमाशङ्का—यथार्थानुभवविभागेऽपि **प्रत्यक्षानुमितीत्येवं** प्रत्यक्षं प्रवेशितम् । तत्करणविभागेऽपि । तत् कथम् ? न ह्येकस्यैव कार्यत्वं कारणत्वं च सम्भवतीति । इमामाशङ्कां परिहरति । **तत्रे**ति । **तत्र** प्रत्यक्षानुमानोपमानशब्देषु **प्रत्यक्षं** प्रत्यक्षपदवाच्यं प्रत्यक्ष-

**इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् । तत् द्विविधम्, निर्विकल्पकं सविकल्पकं चेति । तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम् ।**

ज्ञाननिरूपितासाधारणकारणतावदभिन्नामिति । तथा चानुभवविभागे प्रत्यक्षपदं प्रत्यक्षज्ञानपरं करणविभागे च तत्पदं तत्करणपरमिति न दोष इति । ननु **प्रत्यक्षज्ञानकरण**मित्यत्र प्रत्यक्षज्ञानं नाम किम् ? तदाहेन्द्रियेति । एवं चेश्वरीयप्रत्यक्षे नित्ये एतल्लक्षणाभावेऽपि न क्षतिः । अस्य ग्रन्थस्योक्तप्रश्नसमाधानार्थत्वात् । अर्थेन घटपटादिना सह सन्निकर्षः सम्बन्धः । तृतीयार्थः साहित्यं वैशिष्ट्यमाधाराधेयभावरूपम् । अर्थनिष्ठसम्बन्धस्य इति यावत् । अर्थे सन्निकर्ष इत्येव वा विग्रहः । इन्द्रियस्यार्थसन्निकर्षः । षष्ठ्यर्थो निरूपितत्वम् । एतेने**न्द्रियार्थसन्निकर्ष**त्यस्येन्द्रियप्रतियोगिकार्थानुयोगिकसम्बन्धेत्यर्थकत्वे श्रोत्रेन्द्रियशब्दसन्निकर्षस्याग्रहणम् । श्रोत्रेन्द्रियस्याकाशत्वात् शब्दस्य तत्राधेयत्वात् सन्निकर्षस्य समवायस्याकाशप्रतियोगिकत्वशब्दानुयोगिकत्वयोरभावात् आधारो ह्यनुयोगी ; आधेयः प्रतियोगीति । तस्येन्द्रियानुयोगिकार्थप्रतियोगिकसम्बन्धपरत्वे चक्षुर्घटसंयोगाद्यग्रहणम् , घटस्यानुयोगिताया एव स्वरसत्वादित्यपास्तम् । अन्यविधार्थस्योक्तस्य सर्वानुगतत्वात् । सन्निकर्षाज्जन्यम् । पञ्चम्यर्थो निरूपितत्वम् । **निष्प्रकारक**मिति । निष्क्रान्तं प्रकारात् । निष्क्रान्तं सम्बन्धशून्यं । सम्बन्धश्च प्रकारिता । प्रकारनिरूपितप्रकारिताशून्यमिति यावत् । तथा च प्रकारिताशून्यत्वे सति ज्ञानत्वं लक्षणम् । घटादिवारणाय द्वितीयदलम् । निर्विकल्पकमित्यत्र विकल्पो नाम भेदः । स च प्रकारित्वविशेष्यित्वसंसर्गित्वाख्यविषयितारूपः । तच्छून्यमित्यर्थो लभ्यते । तत्र निष्प्रकारकमित्यनेन प्रकारिताशून्यत्वमात्रमुक्तं, तावदेव लक्षणं पर्याप्तमिति । एवं विशेष्यिताशून्यत्वं संसर्गिताशून्यत्वमपि पृथग्लक्षणं संभवति । इदमत्र बोध्यम्—अयं मनुष्यः, अयं पशुरित्यादिज्ञानं तावदनुभवसिद्धम् ।

**सप्रकारकं ज्ञानं सविकल्पकम् । यथा, डित्थोऽयं ब्राह्मणोऽयं श्यामोऽयं पाचकोऽयं इति ।**

**प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः । संयोगः,**

---

तत्रायमर्थो विशेष्यः, मनुष्यत्वादि विशेषणम् । एवं विशेषणविशेष्यविषयकत्वात्तद् ज्ञानं सविकल्पकं विशिष्टज्ञानमित्युच्यते । विशिष्टज्ञाने च विशेषणज्ञानं कारणम् । न हि दण्डस्य ज्ञानाभावे दण्डी पुरुष इति ज्ञानं भवति । तदत्र मनुष्यत्वादिकं विषयीकृत्य प्रथमत एकं ज्ञानं भवतीति स्वीकार्यम् । तच्च न विशिष्टज्ञानम् , तत्पूर्वं कस्यचिद्विशेषणस्य ज्ञानाभावात् । तत्र च मनुष्यत्वज्ञाने मनुष्यत्वमनुष्यव्यक्त्योः संसर्गो भासतां मा वा । प्रकारस्तावद्विषयी भवति । परं तु न प्रकारतया विषयी भवति । कस्यचिद्विशेष्यतया भानाभावेऽस्य प्रकारतया भानस्य दुर्वचत्वात् । अत एवं प्रकारज्ञानतया कल्प्यमानस्य, प्रकारज्ञानान्तरापेक्षा नास्तीति प्रदर्शनाय निष्प्रकारकमित्येव निर्विकल्पकं लक्षितवान् ग्रन्थकारः, न तु निर्विशेष्यकं निःसंसर्गकमित्येवम् । निर्विकल्पकस्य चाकारो न प्रदर्शितः, तस्यातीन्द्रियत्वात् । ननु यथार्थानुभवान्तर्भूते प्रत्यक्षे निर्विकल्पकमन्तर्भूतम् । अत्र यथार्थानुभवसामान्यलक्षणस्याव्याप्तिः , किञ्चित्प्रकारकत्वाभावादिति चेन्न । अयथार्थभिन्नत्वे सत्यनुभवत्वं निर्विकल्पकसाधारणयथार्थानुभवलक्षणमित्याशयादिति दिक् ।

लोके नामजातिगुणक्रियाभिर्वस्तुपरिच्छेदो भवति । तदभिसन्धाय क्रमेण चत्वार्युदाहरणानि दर्शयति यथेति । सर्वत्रायम्पदोत्तरमन्ते निर्दिष्टस्येतिशब्दः सम्बन्धः । डित्थः डित्थनामविशिष्टः । इतिशब्दार्थो विषयित्वम् डित्थाभिन्नदमर्थनिरूपितविषयतावदित्यर्थः । ज्ञानमित्यनुषङ्गः ।

**संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति । चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः । घटरूपप्रत्यक्षे संयुक्तसमवायः, चक्षुःसंयुक्ते घटे रूपस्य समवायात् । रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः, चक्षुःसंयुक्ते घटे रूपं समवेतम् , तत्र रूपत्वस्य समवायात् । श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः, कर्णविवरवृत्त्याकाशस्य श्रोत्रत्वात् शब्दस्याकाशगुणत्वात् गुणगुणिनोः समवायात् । शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः,**

---

**चक्षुषे**ति प्रयोज्यत्वं तृतीयार्थः । **घटे**ति । द्रव्यसामान्योपलक्षणम् । **जनन** इति सप्तम्यर्थः प्रयोजकत्वम् । चक्षुर्निरूपितप्रयोज्यत्वाश्रयद्रव्यप्रत्यक्षोत्पत्तिप्रयोजकत्वाश्रयसन्निकर्षः संयोग इत्यर्थः । **घटरूपप्रत्यक्ष** इति । चक्षुषेत्यनुषङ्गः । घटसमवेतरूपविषयकप्रत्यक्ष इत्यर्थः । द्रव्यसमवेतविषयकचाक्षुषप्रत्यक्ष इति यावत् । सप्तम्यर्थः प्रयोजकत्वमनुषक्तसन्निकर्षपदार्थेऽन्वेति । एवमग्रेऽपि । उपपादयति **चक्षुरि**ति । **रूपस्य** सन्निकर्षजन्यप्रत्यक्षविषयरूपस्य । ज्ञानज्ञाप्यत्वं पञ्चम्यर्थः । तस्य संयुक्तसमवायत्वे संयुक्तसमवाय एव वाऽन्वयः । तथा च घटरूपप्रत्यक्षजनकसन्निकर्षः स्वजन्यप्रत्यक्षविषयरूपप्रतियोगिक, चक्षुःसंयुक्तघटानुयोगिकसमवायविषयकज्ञानज्ञाप्यसंयुक्तसमवायाभेदाश्रयः इति समुदायार्थः । घटस्य चक्षुःसंयुक्तत्वं रूपस्य तत्समवेतत्वं च यदि ज्ञायते तदा रूपप्रत्यक्षे सन्निकर्षः संयुक्तसमवाय इति ज्ञायते । एवमुत्तरत्र । रूपत्वसामान्यप्रत्यक्षे द्रव्यसमवेतसमवेतविषयकचाक्षुषे । **कर्णविवरे**ति । विवरं सन्निवेशविशेषः कर्णविवरे वृत्तिर्यस्य तस्याकाशस्य । वृत्तिरवच्छिन्नत्वम् । विवर इति सप्तम्यर्थो निरूपितत्वम् । तथा च कर्णसम्बन्धिसन्निवेशविशेषावच्छिन्नाकाशनिष्ठश्रोत्रत्वज्ञानज्ञाप्यत्व, शब्दनिष्ठाकाशगुणत्वज्ञानज्ञाप्यत्व, गुणगुणि-

**श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् । अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः, भूतलं घटाभाववत् इत्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् । एवं सन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् । तत्करणमिन्द्रियम् । तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ।**

---

सम्बन्धित्वविशिष्टसमवायज्ञानज्ञाप्यत्वाश्रयसमवायाभेदाश्रयः श्रोत्रजन्यशब्दसाक्षात्कारजनकसन्निकर्ष इति । पञ्चम्यन्तत्रयार्थविषयकज्ञानं समवायज्ञाने कारणम् । इत्यत्रेति । इतिशब्दार्थः विषयित्वरूपधर्मः अत्रेतीदंशब्दार्थो बुद्धिस्थं ज्ञानम् । सप्तम्यर्थो निरूपितत्वं विशेषणत्वेऽन्वेति । ज्ञाने भूतलस्य विशेषणत्वात् भूतलनिरूपिता घटाभावनिष्ठा विशेषणता । तथा च घटाभाववद्भूतलनिरूपितविषयिताश्रयज्ञाननिरूपितत्वाश्रय, चक्षुःसंयुक्तभूतलनिरूपितत्वाश्रय, घटाभावनिरूपिताधेयताश्रयविशेषणत्वविषयकज्ञानज्ञाप्यत्वाश्रयविशेषणविशेष्यभावाभेदाश्रयस्तादृशसन्निकर्ष इति । विशेषणविशेष्यभाव इत्यनेन प्रकृते विशेषणत्वं विवक्षितम् । ननु सन्निकर्षः प्रत्यक्षे कारणम् । कारणं च कार्यनियतपूर्ववर्ति । विशेषणत्वं तु घटाभावस्य प्रत्यक्षजननानन्तरं भविष्यति । न पूर्वम् । स कथं सन्निकर्ष इति चेत्; सत्यम् न विशेषणत्वं सन्निकर्षः । किं तु प्रत्यक्षेऽभावस्य विशेषणताप्रयोजको भूतलस्य घटाभावस्य च यः सम्बन्धः स एव सन्निकर्षः । एवं च संयुक्तविशेषणतेत्यस्य संयुक्तीयस्वरूपसम्बन्ध इत्यर्थ इत्यन्यत्र विस्तरः ।

पूर्वमिन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमित्यत्रेन्द्रियार्थसन्निकर्षजन्यत्वं कथमिति प्रश्ने तन्निरूपणमेतावता विधायोपसंहरति एवमिति । एवं प्रत्यक्षानुमानेति विभागवाक्ये प्रत्यक्षपदस्य प्रत्यक्षज्ञानकरणेत्यर्थमुक्त्वा प्रत्यक्षज्ञानमुपपाद्य तत्करणमेव प्रत्यक्षपदवाच्यमिति व्युत्पाद्य तत्करणं किमित्यत्र विशिष्य तद्दर्शयति तत्करणमिति । तस्मादिति । अयं भावः—प्रत्यक्षा-

नुमानोपमानशब्दभेदादित्यस्य प्रत्यक्षज्ञानकरणानुमितिकरणोपमितिकरणशब्दभेदादित्यर्थः सिद्ध्यति । न तथैव विभजने तात्पर्यम् , तत्र प्रत्यक्षज्ञानेत्यादेरिन्द्रियार्थसन्निकर्षजन्यज्ञानेत्येवमर्थकतया तत्तदर्थघटकेन्द्रियादिमात्रेण विभजनस्य सुकरत्वेन शिरोवेष्टनस्यायुक्तत्वात् । तथा चेन्द्रियपरामर्शसादृश्यज्ञानशब्दभेदादित्येव विभागे तात्पर्यम् । अत एवेन्द्रियार्थसन्निकर्षेत्यपि न विभागवाक्ये निवेशनीयम् । इन्द्रियार्थसन्निकर्षस्येवेन्द्रियस्याप्यसाधारणकारणत्वप्रसिद्धिसद्भावेन तावन्मात्रोक्त्यैव सामञ्जस्यात् । न च तर्हि परामर्शेत्यपि न वक्तव्यम् । परामर्शपदस्य व्याप्तिविशिष्टपक्षधर्मताज्ञानेत्यर्थकतया तद्धटकस्य व्याप्तिज्ञानस्य करणतया निर्देशस्य युक्तत्वादिति वाच्यं व्याप्तिविशिष्टपक्षधर्मताज्ञानमित्यस्य शोधने व्याप्तिज्ञानेति विशिष्टांशस्य तत्र घटकत्वाभावात् । घटकोक्त्यैव सामञ्जस्ये घटितं न वक्तव्यमित्येतावत एव प्रकृते विवक्षितत्वात् । व्याप्तिज्ञानं वा वक्तव्यं पक्षधर्मताज्ञानं वेति विनिगमनाविरहाच्च । अत एव 'तस्माल्लिङ्गपरामर्शोऽनुमान'मिति वक्ष्यतीति ।

इति प्रत्यक्षपरिच्छेदः ।

---

## अनुमानपरिच्छेदः ।

**अनुमितिकरणं अनुमानम् । परामर्शजन्यं ज्ञानं अनुमितिः । व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः ।**

---

प्रत्यक्षानुमानेति करणविभागवाक्ये प्रत्यक्षशब्दार्थ उक्तः । अनुमानशब्दार्थः क इत्यत्राह **अनुमितीति** । अनुमितिनिरूपितकरणतावदनुमानशब्दवाच्यमिति बोधः । तद्घटकानुमितिशब्दार्थमाह **परामर्शेति** । परामर्शध्वंसेऽतिव्याप्तिवारणाय ज्ञानत्वम् । परामर्शशब्दार्थमाह **व्याप्तीति** । व्याप्त्या विशिष्टम् । पक्षस्य धर्मः धर्म आधेयतावान् षष्ठ्यर्थो निरूपितत्वं धर्मस्य भावो धर्मता । असाधारणधर्मस्तल्प्रत्ययार्थः । एवं च पक्षनिरूपितनिरूपितत्वाश्रयाधेयतावन्निष्ठासाधारणधर्म इति पक्षधर्मताशब्दार्थः । स चासाधारणधर्मस्तत्प्रत्ययप्रकृत्यर्थतावच्छेदक एव । तथा च पक्षधर्मतेत्यस्य पक्षनिरूपिताधेयतेति निष्कृष्टार्थः । तस्या ज्ञानम् । षष्ठ्या विषयित्वमर्थः । व्याप्तिविशिष्टस्य पक्षधर्मताज्ञानम् व्याप्तिविशिष्टपक्षधर्मताज्ञानम्। व्याप्तिविशिष्टवस्तुविषयकपक्षनिरूपिताधेयताविषयकज्ञानं परामर्शपदवाच्यमिति विशिष्टार्थः । अथ वा व्याप्तिविशिष्टा च सा पक्षधर्मता च तस्या ज्ञानमिति विग्रहः । वैशिष्ट्यं सामानाधिकरण्यसंम्बन्धेन । यद्वा व्याप्तिविशिष्टस्य पक्षधर्मता तस्या ज्ञानमिति । अत्र व्याप्तिविशिष्टं च तत् पक्षधर्मताज्ञानं चेति विग्रहं व्याप्तिविशिष्टमित्यस्य व्याप्तिविषयकमित्यर्थं च प्रायो वर्णयन्ति । तत्र हेतुं चाहुः व्याप्तिविशिष्टस्येति षष्ठीसमासे व्यभिचारिलिङ्गकपरामर्शेऽव्याप्तिरिति । तत्रेदं वक्तव्यम् विशिष्टपदस्य तद्विषयकेत्यर्थवर्णनं बालव्युत्पादनार्थे ग्रन्थे न स्वरसम् । न चाव्याप्तिपरिहारार्थं तथा वर्णनामिति वाच्यम् । कर्मधारयविग्रहेऽप्यव्याप्तितादवस्थ्यात् । धूमवान्

**यथा, वह्निव्याप्यधूमवान् अयं पर्वतः इति ज्ञानं परामर्शः । तज्जन्यं पर्वतो वह्निमान् इति ज्ञानं अनुमितिः । यत्र यत्र धूमः**

---

वह्नेरित्यत्र व्याप्तेरेवाप्रसिद्ध्या व्याप्तिविशिष्टत्वस्य ज्ञाने दुर्वचत्वात् । हेतुव्यापकसाध्यसामानाधिकरण्यं हि दीपिकोक्ता व्याप्तिः । न च तत्र वह्निरूपहेतुव्यापकत्वं धूमरूपसाध्यस्य सम्भवति । तर्हि का गतिरिति चेन्न कश्चित्क्लेशः । पूर्वं यथार्थानुभवस्य प्रत्यक्षानुमितीति विभागं विधाय तत्करणस्यैव प्रत्यक्षानुमानेति विभजनात् यथार्थानुमितिकरणस्यैव प्रकृते व्युत्पादनीयतया तादृशपरामर्शः सद्धेतुपरामर्श एवेति न व्याप्तिविशिष्टस्य पक्षधर्मताया ज्ञानमिति स्वरसार्थो भञ्जनीय इति । न च दीपिकाविरोधः, वस्तुगत्या व्याप्तिमान् यस्तस्य पक्षधर्मताज्ञानमिति न मन्तव्यम् ज्ञाने व्याप्तिविषयकत्वमपि विवक्षितमिति विशिष्टपदस्वारस्यप्रदर्शनार्थत्वात्तद्ग्रन्थस्येति । परामर्शे व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वं ज्ञानाकारप्रदर्शनेन व्युत्पादयति यथेति । थाल्प्रत्ययार्थः प्रकारः । इतिशब्दस्य विषयित्वमर्थः । अथ वा इतिशब्दः प्रकारवचनः । वह्निव्याप्यविशिष्टपर्वतत्वार्थकः । स्वावच्छिन्नविषयकत्वसम्बन्धेन तस्य ज्ञानेऽन्वयः । तथा च परामर्शपदवाच्यवह्निव्याप्यविशिष्टपुरोवर्तिपर्वतत्वावच्छिन्नविषयकज्ञानं व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वरूपयादृशप्रकारविशिष्टमिति वाक्यार्थः । अथानुमित्याकारं दर्शयति तज्जन्यमिति । व्याप्तिविशिष्टपक्षधर्मताज्ञानमित्यत्र व्याप्तिशब्दार्थमाह यत्रेति । यत्र धूमस्तत्राग्निरितिपर्यन्तं प्रकृते वाक्यपरम् । इतिशब्द आनुपूर्वीरूपधर्मपरः । तस्य स्वावच्छिन्नवाक्यबोध्यत्वसम्बन्धेन साहचर्यनियमेऽन्वयः । एवं च यत्रपदाद्यग्निपदान्तनिष्ठानुपूर्व्यवच्छिन्नवाक्यबोध्यसाहचर्यनियमो व्याप्तिशब्दार्थ इति । अत्र यच्छब्दो महानसादिपरः । यन्निरूपिताधेयतावान् धूमः तन्निरूपिताधेयतावानग्निरित्यर्थः । तथा च साहचर्यनियमः कथं

**तत्राग्निः इति साहचर्यनियमो व्याप्तिः ।**

---

बोद्धयत इति चेदुच्यते । **यत्र धूम** इति वाक्यानुसारेण **तत्रे**त्यस्य धूमवतीत्यर्थः प्रतीयते । यच्छब्दघटितवाक्येन यच्छब्दार्थे यादृशविशिष्टार्थसम्बन्धो बोद्धयते, तच्छब्देन तादृशविशिष्टार्थसम्बन्धित्वेन तादृशयच्छब्दार्थप्रतीतिरानुभविकत्वात् । एवञ्च **तत्राग्नि**रित्यनेन धूमवद्वृत्तिरग्निरित्युक्तं भवति । उद्देश्यतावच्छेदकव्यापकत्वस्य विधेये भानं चानुभवसिद्धम् । एवञ्च धूमवदुद्देशेनाग्निविधाने वाक्यतात्पर्यमिति धूमवत्त्वव्यापकत्वमग्नौ भासते । अतो हेतुव्यापकसाध्यभानं सिद्धयति । अग्नौ धूमवद्वृत्तित्वभानाद्धूमेऽपि हेतौ तुल्यवित्तिवेद्यतया साध्यसामानाधिकरण्यभानं सिद्धमिति वक्ष्यमाणसाहचर्यनियमस्य वाक्यादवगतिरस्त्येव । अत्र '**तत्राग्नि**' रित्यत्राग्निपदं धूमव्यापकाग्नीत्यर्थलाक्षणिकम् । अतो व्यापकत्वभानमित्यप्याहुः । **साहचर्यनियम** इति । सह चरतीति सहचरः तस्य भावः साहचर्यम् । चरतीत्यस्य प्रकृते वर्तत इत्यर्थः । अग्निना सह वर्तते धूमः । सहशब्दार्थोऽधिकरणम् । अग्न्यधिकरणवृत्तिर्धूम इति, अग्निसाहचर्यमग्निसामानाधिकरण्यं धूमे । अग्निसाहचर्यस्य धूमे नियमः । षष्ठ्यर्थ आधेयत्वम् । सप्तम्यर्थो निरूपितत्वं । नियमो व्यापकत्वम् । तथा चाग्निसामानाधिकरण्यनिष्ठं धूमनिरूपितव्यापकत्वम् । व्यापकत्वं चाभावाप्रतियोगित्वं, जगद्व्यापको विष्णुरित्युक्तौ जगन्निष्ठाभावाप्रतियोगी विष्णुरिति बोधात् । धूमनिरूपितव्यापकत्वं च धूमनिष्ठाभावाप्रतियोगित्वम् । एवञ्च यत्र यत्र धूमत्वम्, तत्र तत्राग्निसामानाधिकरण्यमिति धूमनिष्ठाभावाप्रतियोगि भवत्यग्निसामानाधिकरण्यम् । यद्यप्ययं नियमः साहचर्यनिष्ठः । व्याप्तिश्च हेतुनिष्ठा वक्तव्या । अथापि नियमविशिष्टं साहचर्यं धूमनिष्ठाभावाप्रतियोगिभूतमग्निसामानाधिकरण्यं व्याप्तिरित्यत्र तात्पर्यम् । इत्थमेवार्थं मनसि निधाय मणिकारः,

**व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता ।**

साध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकवत्त्वं व्याप्तिरित्युक्तवान् । तस्य हि स्वव्यापकसाध्यसामानाधिकरण्यकहेतुतावच्छेदकवत्त्वमित्यर्थः । परन्त्वेवं धूमत्वव्यापकत्वस्य वह्निसामानाधिकरण्ये विवक्षणापेक्षया वह्नौ धूमव्यापकत्वविवक्षणे लाघवमस्तीति परिचिन्तनया धूमव्यापकवह्निसामानाधिकरण्यं व्याप्तिरिति निष्कर्षः क्रियत इति ध्येयम् । यद्वा धूमनिष्ठाग्निसामानाधिकरण्यस्य नियमो व्यवस्थितत्वम् अग्नीतरासम्बन्धित्वे सत्यग्निसम्बन्धित्वम् ; अग्नीतरानिरूपितत्वे सत्यग्निनिरूपितत्वम् । इतरेत्यनेन च प्रकृतेऽग्न्यभावो विवक्षितः । धूमनिष्ठसामानाधिकरण्यस्याग्न्यभावानिरूपितत्वे सत्यग्निनिरूपितत्वमस्तीत्युक्तौ पूर्ववदस्य नियमस्य साहचर्यनिष्ठत्वात् व्याप्तेर्हेतुनिष्ठत्वस्यावश्यकत्वात् नियमविशिष्टं सामानाधिकरण्यं व्याप्तिरिति वक्तव्यम् । धूमनिष्ठसामानाधिकरण्येऽग्न्यभावानिरूपितत्वोक्तौ धूमेऽग्न्यभावनिरूपितसामानाधिकरण्याभावो लभ्यते । तथा चाग्न्यभावासमानाधिकरणत्वे सत्यग्निसामानाधिकरण्यं साध्याभाववदवृत्तित्वे सति साध्यवद्वृत्तित्वं व्याप्तिरिति सिद्ध्यति । अस्या व्याप्तेः केवलान्वयिन्यव्याप्त्या हेतुव्यापकसाध्यसामानाधिकरण्यमिति निष्कर्षकरणमिति । पक्षधर्मताशब्दार्थमाह व्याप्यस्येति । वस्तुतो यो व्याप्यो धूमादिस्तन्निष्ठपर्वतादिवृत्तित्वमिति । पर्वतवदन्यस्यापि कदाचित्पक्षत्वं भवतीत्यादिपदम् । यदज्ञातमनुमीयते तत्साध्यम् ; येन साध्यते स हेतुः ; यत्र साध्यते स पक्षः ; हेतोः पक्षे सत्त्वं पक्षधर्मतेति ।

प्रत्यक्षानुमानेत्यत्रानुमानपदेन परामर्शो विवक्षणीय इति वक्ष्यति । स्वार्थानुमानस्थले परामर्शस्यानुमानत्वेऽपि परार्थानुमानस्थले वाक्यस्यैवानुमानत्वात् कथं सर्वत्र परामर्शोऽनुमानमिति शङ्का मा भूदिति, स्वयमेवानुमानद्वैविध्यमुपपाद्यानुमानपदेन परामर्शमात्रग्रहणस्य युक्ततां गमयितुमारभते

**अनुमानं द्विविधम् , स्वार्थं परार्थं चेति , स्वार्थं स्वानुमिति-हेतुः । तथा हि , स्वयमेव भूयो दर्शनेन यत्र धूमस्तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतः पर्वते धूमं पश्यन् तद्गते चाग्नौ सन्दिहानः व्याप्तिं स्मरति यत्र धूमः तत्राग्निरिति ।**

---

**अनुमानमित्यादिना** । **अनुमानं** तार्किकैरनुमानपदेन व्यवह्रियमाणम् । **स्वार्थमिति** स्वस्यार्थः प्रयोजनं यस्मात्तत् । **परार्थं** परस्यार्थः प्रयोजनं यस्मात्तत् । प्रयोजनं च प्रकृतेऽनुमितिरित्याशयेन समासार्थमेकस्याह स्वानुमितिहेतुरिति । स्वपदेन यस्मिन्ननुमानमस्ति स पुरुषो ग्राह्यः । उपपाद-दयितुमाह **तथा हीति** । सर्वत्र तथा हीत्यारभ्योपपादकवाक्यं यावत्प्रयुज्यते तावद्वाक्यप्रतिपाद्यार्थनिष्ठं हेतुत्वं **हि**शब्देनोच्यते । तथेत्यत्र थाल्प्रत्ययार्थप्रकारे हेतुत्वस्य निरूपकतासम्बन्धेनान्वयः । तथा च पूर्वोक्तार्थः वक्ष्यमाणार्थनिष्ठहेतुतानिरूपकपूर्वोक्तप्रकारविशिष्ट इति **तथा हीत्यस्यार्थः** । उपपादयति **स्वयमेवेति** । एवकारः पञ्चावयववाक्यप्रयोक्तृपुरुषान्तरव्यवच्छेदार्थः । 'तत्र धूमं पश्य'न्नित्युक्तौ तत्रेत्यस्य पर्वतसमीप इत्येवार्थः प्रतीयेत , पर्वतसमीपमित्येत्र प्रागुक्तत्वात् । अतः पुनः **पर्वत** इत्युक्तम् । **तद्गते** पर्वतं गते तन्निष्ठे । स्वेतरानधीनं स्वाधीनं भूयोदर्शनजन्यं यत्र धूमस्तत्राग्निरित्यानुपूर्वीकशब्दगम्यव्याप्तिविषयकं महानसाद्यवच्छिन्नत्वविषयकं च यद्ग्रहणं तदुत्तरकालिकपर्वतसमीपवृत्तिसंयोगानुकूलव्यापाराश्रयाभिन्नः पर्वतविषयकधूमविषयकदर्शनाश्रयः समुच्चयाश्रयपर्वतनिष्ठाग्निविषयकसन्देहाश्रयः 'यत्र धूमस्तत्राग्नि'रिति शब्दगम्यव्याप्तिविषयकस्मरणाश्रयत्ववानित्येवं बोधः । प्रथमतोऽग्निधूमयोः सहचरितयोर्महानसादौ भूयोदर्शनम् । ततो धूमसामान्यस्याग्निसामान्येन व्याप्तिरूपसम्बन्धज्ञानम् । अथ कदाचित् पर्वते धूमदर्शनम् । ततः पूर्वानुभूतव्याप्तिरूपसम्बन्धस्मरणम् । पश्चाद्विशिष्टपरामर्शः । ततोऽनुमितिरिति स्वार्थानुमानस्थले क्रमः । सकृद्धेतु-

तदनन्तरं वह्निव्याप्यधूमवानयं पर्वतः इति ज्ञानमुत्पद्यते । अयमेव लिङ्गपरामर्श इत्युच्यते । तस्मात् पर्वतो वह्निमानित्यनुमितिरुत्पद्यते । तदेतत् स्वार्थानुमानम् ।

यत्तु स्वयमेव धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुंक्ते तत्परार्थानुमानम् । यथा, पर्वतो वह्निमान्, धूमवत्त्वात्, यो यो धूमवान् स सोऽग्निमान् यथा महानसम्, तथा चायम्,

---

साध्यदर्शने साध्यसामान्यस्य हेतुसामान्यस्य च व्याप्तिग्रहो नोदेति । भूयोदर्शने तु तथेति प्रायिकस्थितिपर्यालोचनेन भूयोदर्शनं व्याप्तिग्रहकारणमुक्तम् । तदनन्तरमिति । न विद्यते अन्तरं व्यवधानं यत्र तत् अनन्तरम् अव्यवहितम् । प्रकृते चाव्यवहितोत्तरमित्यर्थः । व्याप्तिस्मरणनिरूपिताव्यवहितोत्तरत्वाश्रयोत्पत्त्याश्रयत्ववद् ज्ञानमिति । अयमेवेत्येवकारेण धूमदर्शनव्याप्तिस्मरणव्यवच्छेदः । परामर्शपदस्य ज्ञानमात्रार्थकतया लिङ्गपरामर्श इत्यस्य लिङ्गविषयकज्ञानमित्यर्थ इति यद्यपि पर्वतो धूमवान् वह्निव्याप्यो धूम इति ज्ञानयोरपि लिङ्गपरामर्शत्वं शक्यशङ्कम्, अथापि व्याप्तिविशिष्टपक्षधर्मताज्ञान एव लिङ्गपरामर्शपदं पारिभाषिकमिति भावः । तस्मादिति परामर्शादित्यर्थः । पञ्चम्यर्थो निरूपितत्वमुत्पत्तावन्वेति । तद् स्वार्थानम् एतद् लिङ्गपरामर्शरूपं ज्ञानम् । परार्थानुमानं व्युत्पादयति यत्त्विति । यत् पञ्चावयववाक्यमित्यन्वयः । स्वयमेव धूमादग्निमनुमायेति । स्वस्य ज्ञानाभावे परं प्रति प्रतिपादनमशक्यमित्यभिप्रेत्येदमुक्तम् । स्वयमेवेत्यविवक्षितम् । तद् पञ्चावयववाक्यम् । पञ्च अवयवा यस्य तत् पञ्चावयववाक्यम् । पञ्चावयवान् प्रकृते विशिष्य दर्शयति यथेति । यादृशपञ्चावयववाक्यत्वरूपप्रकारविशिष्टमित्यर्थः । धूमवत्त्वादिति द्वितीयोऽवयवः । तथा चायमिति चतुर्थोऽवयवः । इतीति उक्तशब्दसमुदा-

**तस्मात्तथेति । अनेन वाक्येन प्रतिपादितात् लिङ्गात् परोऽप्यग्निं प्रतिपद्यते । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्च अवयवाः। पर्वतो वह्निमानिति प्रतिज्ञा । धूमवत्त्वादिति हेतुः । यो यो धूमवान् सोऽग्निमान् यथा महानसमित्युदाहरणम् । तथा चायमित्यु-**

---

यनिष्ठानुपूर्व्यवच्छिन्नमित्यर्थः । अस्य वाक्यस्य परार्थानुमानत्वं कथमित्यत्र तस्यानुमितिप्रयोजकत्वं विद्यमानं दर्शयति **अनेनेति** । **प्रतिपादितात्** ज्ञापितात् प्रतिपादनं ज्ञानानुकूलव्यापारः । स चैतद्वाक्यमेव । तथा चैतद्वाक्याभिन्नव्यापारजन्यज्ञानविषयीभूतादित्यर्थः । क्तप्रत्यस्य फलाश्रय इत्यर्थः । फलाश्रयत्वं च प्रकृते ज्ञानविषयत्वमिति । **प्रतिपद्यत** इति । तथा च परो वाक्यं श्रुत्वा तदर्थं बुद्ध्यते । ततो व्याप्तिविशिष्टपक्षधर्मता प्रकृतेऽस्तीति परामृशति । ततोऽनुमितिमान् भवतीति भावः । पञ्चावयववाक्यमित्युक्तम् । तत्रावयवानां पारिभाषिकं नाम ग्राहयति **प्रतिज्ञेति** । कस्य भागस्य किं नामेत्यत्र विशदयति **पर्वत** इति । पर्वतः पक्षः वह्निस्साध्यः । तथा च साध्यविशिष्टपक्षप्रतिपादकवाक्यं प्रतिज्ञेत्यर्थः । **धूमवत्त्वादिति** धूमादिति यावत् । ज्ञानज्ञाप्यत्वं पञ्चम्यर्थः । ज्ञाने धूमस्य विषयितासम्बन्धेनान्वयः । धूमश्च हेतुः । तथा च हेतुविषयकज्ञानज्ञाप्यत्वबोधकवाक्यं हेतुवाक्यमित्यर्थः । उदाहरणे वाक्यत्रयम् । यो यो धूमवानिति प्रथमम् । सोऽग्निमानिति द्वितीयम् । यथा महानसमिति तृतीयम् । प्रथमयच्छब्दः प्रकृते धूमवदेकव्यक्तिपरः । द्वितीययच्छब्दो व्यक्त्यन्तरपरः । **स** इति यच्छब्दद्वयोपात्तसर्वव्यक्तिपरः । अथ वा स इत्यस्य पूर्ववाक्यानुसारात् धूमवद्व्यक्तिरित्यर्थः । **यथेति** धूमवत्त्वाग्निमत्त्वरूपयादृशप्रकारद्वयविशिष्ट इत्यर्थः । अत्रोदाहरणे धूमवद्व्यक्तौ वह्निमत्त्वबोधके धूमवत्त्वव्यापकवह्निमत्त्वबोधकत्वमप्यस्ति । उद्देश्य-

**पनयः । तस्मात्तथेति निगमनम् । स्वार्थानुमितिपरार्थानुमित्योः लिङ्गपरामर्श एव करणं, तस्माल्लिङ्गपरामर्शोऽनुमानम् ॥**

**लिङ्गं त्रिविधं, अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकिं चेति । अन्वयेन व्यतिरेकेण च व्याप्तिमत् अन्वयव्यतिरेकि, यथा,**

---

तावच्छेदकव्यापकत्वस्य विधेये भानसम्भवात् । वीप्साबलाच्च तादृशभानं स्वरसम् । तथा च व्याप्तिप्रतिपादकवाक्यमुदाहरणमित्युक्तं भवति । **तथा चायम्** वह्निव्याप्यधूमवान् पर्वतः । साध्यव्याप्यहेतुमत्पक्षप्रतिपादकवाक्यमुपनय इत्यर्थः । **तस्मात्तथा** वह्निव्याप्यधूमवत्त्वाद्वह्निमान् ज्ञानज्ञाप्यत्वं पञ्चम्यर्थः । तथा च साध्यव्याप्यहेतुज्ञानज्ञाप्यसाध्यवत्प्रतिपादकवाक्यं निगमनमिति सिद्धम् । एवं चेदृशसमुदायरूपाद्वाक्याद्व्याप्तिपक्षधर्मताविशिष्टज्ञानोत्पत्तेः प्रागुक्तत्वात् स्वार्थानुमिताविव परार्थानुमितावपि परामर्श एव कारणम् । वाक्यस्य तदुपयोगित्वेनान्यथासिद्धत्वान्न करणत्वम् । केवलमनुमितिप्रयोजकत्वमात्रेण तत्र परार्थानुमानव्यवहार इति दर्शयति **स्वार्थेति** । तथा च प्रत्यक्षानुमानेति विभागवाक्येऽनुमानपदेन परामर्श एव विवक्षित इति दर्शयति **तस्मादिति** । व्याप्तिविशिष्टपक्षधर्मताज्ञानमित्यत्र व्याप्तिः सर्वत्र नैकरूपा । किं तु क्वचिदन्वयव्याप्तिरूपा क्वचिद्व्यतिरेकव्याप्तिरूपा चेति व्युत्पादयितुं लिङ्गत्रैविध्यं पूर्वैरुक्तं दर्शयति **लिङ्गमिति** । अन्वयश्च व्यतिरेकश्च तावस्य स्त इत्यन्वयव्यतिरेकि । **केवलो** व्यतिरेकाभावविशिष्टोऽन्वयोऽस्यास्तीति **केवलान्वयि** । **केवलो**ऽन्वयाभावविशिष्टो व्यतिरेकोऽस्यास्तीति **केवलव्यतिरेकि** । अत्र कस्यान्वयः कस्य व्यतिरेकश्च विवक्षितः ? अन्वयवत्त्वं व्यतिरेकवत्त्वं च केन सम्बन्धेनेत्यत्र विशदयति **अन्वयेनेति** । तृतीयार्थो निरूपितत्वं व्याप्तावन्वेति । तथा च व्याप्तौ साध्यादिनिरूपितत्वस्यैव सम्भवादन्वयपदस्य साध्यान्वयः साध्यसम्बन्धः साध्यवत्त्वमित्यर्थः ।

**वह्नौ साध्ये धूमवत्त्वम् । यत्र धूमः तत्राग्निः यथा महानस इत्यन्वय-व्याप्तिः । यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रद इति व्यतिरेकव्याप्तिः ॥**

---

साध्यवत्त्वं च साध्यमेव । व्यतिरेकपदस्य साध्यव्यतिरेकः साध्याभाव इत्यर्थ इति सूचितम् । एवञ्च साध्यनिरूपितव्याप्तिमत्त्वे सति साध्याभावनिरूपितव्याप्तिमत्त्वमन्वयव्यतिरेकित्वम् । अन्वयव्यतिरेकीत्यत्रेनिप्रत्ययेन स्वनिरूपितव्याप्तिमत्त्वरूपसम्बन्धेनान्वयव्यतिरेकवान् विवक्षित इत्युक्तं भवति । **साध्ये** सिद्धिविषये,अनुमितिविषये । इयं सति सप्तमी । ईदृशस्थले सप्तम्याः समभिव्याहृतधात्वर्थ एवार्थः । अतोऽत्र वह्नाविति सप्तम्याः साध्य इत्यत्र सिद्धिरूपधात्वर्थोऽर्थः । तस्य समानकालिकत्वसम्बन्धेन भवनक्रियायामन्वयः । भवतीत्यध्याहारः । तथा च साध्याभिन्नवह्निविषयकसिद्धिसमानकालिकयादृशान्वयव्यतिरेकित्वरूपप्रकारविशिष्टभवनाश्रयो धूमवत्त्वमिति बोधः । ननु लिङ्गस्य साध्यव्याप्तिः साध्याभावव्याप्तिश्चेत्युभयं कथं स्यात्, मिथो विरोधादित्याशङ्कायां साध्याभावव्याप्तिरित्युक्तौ साध्याभावेन साहचर्यनियम इति न मन्तव्यम् । अपि त्वन्यविधैव सा व्याप्तिरिति बोधयितुमाह **यत्रेति** । **महानस** इति **महाह्रद** इति च सप्तम्यन्तम् । **तत्र धूमोऽपि नास्तीति** । वह्न्यभाववद्ध्रदादिनिरूपिताधेयत्वाभाववान् धूम इत्यर्थः । **इति व्यतिरेकव्याप्तिः** एतदानुपूर्वीकशब्दगम्या व्यतिरेकव्याप्तिः । अत्र वह्न्यभाववन्तमुद्दिश्य धूमाभावविधाने तात्पर्यात् तयोर्व्याप्यव्यापकभावो भासते । तथा च वह्न्यभावव्यापकीभूताभावप्रतियोगी धूम इत्युदाहरणाल्लभ्यते । एवञ्च साध्यनिरूपितव्याप्तिर्नाम साध्येन साहचर्यनियमः, साध्यव्यतिरेकनिरूपितव्याप्तिर्नाम साध्याभावव्यापकीभूताभावप्रतियोगित्वम् । तदुभयञ्च मिथो विरुद्धमिति भावः । नन्विदमन्वयव्यतिरेकिलक्षणं केवलव्यतिरेकिण्यतिव्याप्तम् , तस्यापि वस्तुतोऽन्वयव्याप्तिमत्त्वादिति चेन्न ।

**अन्वयमात्रव्याप्तिकं केवलान्वयि । यथा, घटोऽभिधेयः प्रमेयत्वात् पटवत् इत्यत्र प्रमेयत्वाभिधेयत्वयोः व्यतिरेकव्याप्तिर्नास्ति, सर्वस्यापि प्रमेयत्वात् अभिधेयत्वाच्च ।**

---

प्रकृतलक्षणघटकमन्वयव्याप्तिमत्त्वं नाम प्रकृतपक्षभिन्नपदार्थावच्छिन्नसाध्यव्याप्तिमत्त्वम् । साध्यसामानाधिकरण्यं हि व्याप्तिः । तच्च प्रकृतपर्वतादिपक्षभिन्नमहानसाद्यवच्छेदेनापि हेतावस्तीति लक्षणसमन्वयः । तत्र तु पृथिवीसामान्यस्य पक्षत्वात्तद्भिन्ने कुत्रापि हेतुसाध्याभावान्न दोष इति। केवलान्वयि लक्षयति **अन्वयेति** । अन्वयमात्रेण व्याप्तिर्यस्य, प्रकृतहेतुनिष्ठव्याप्तित्वव्यापकं यत् अन्वयनिरूपितत्वं तदन्वयनिरूपितत्वविशिष्टव्याप्तिमत्केवलान्वयिशब्दवाच्यमिति । यत्र हि व्याप्तिद्वयमप्यस्ति तत्र व्याप्तित्वस्य व्यतिरेकव्याप्तावपि सत्त्वात् तत्र साध्यनिरूपितत्वाभावात् स्वनिष्ठव्याप्तित्वव्यापकान्वयनिरूपितत्वकत्वरूपमिदं लक्षणं न वर्तते । उदाहरति **यथेति** । 'घटोऽभिधेयः प्रमेयत्वात्पटव' दित्यानुपूर्वीकशब्दगम्यहेतुरुक्तकेवलान्वयित्वरूपप्रकारविशिष्ट इति बोधः । पञ्चावयवप्रयोगे कर्तव्येपि तत्र पक्षसाध्यहेतुदृष्टान्तभेदानां प्रदर्शनेऽन्यत्सर्वं स्वयमेव पूरयितुं शक्यमिति **घटोऽभिधेयः प्रमेयत्वात् पटवदि**त्येतावन्मात्रमुक्तम् । उपपादयति **अत्रेति** । अत्र अस्मिन् प्रयोगे 'घटोऽभिधेयः प्रमेयत्वात्पटव'दिति शब्दराशौ । ज्ञाप्यत्वं त्रलोऽर्थः । तादृशशब्दराशिगम्यार्थपर्यन्तो वेदंशब्दार्थः । घटकत्वं त्रलर्थः प्रमेयत्वाभिधेयत्वान्वयि । षष्ठ्यर्थो निरूपितत्वं धात्वर्थे सम्बन्धित्वेऽन्वेति । तस्याख्यातार्थे आश्रयत्वे, तस्य प्रतियोगितानिरूपकत्वसम्बन्धेन नञर्थेऽभावे, तस्याश्रयतासम्बन्धेन व्यतिरेकव्याप्तौ । तथा च व्यतिरेकव्याप्तेः प्रमेयत्वनिष्ठत्वमभिधेयत्वनिरूपितत्वं च नास्तीत्यर्थः । कुत इत्यत्राह **सर्वस्येति** । ज्ञानज्ञाप्यत्वं पञ्चम्यर्थो नञर्थाभावान्वयि । व्यतिरेकव्याप्तिर्हि अभावव्यापकीभूताभावप्रतियोगित्वम् । अभिधेयत्वरूपसाध्यस्य

**व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा, पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् । यदितरेभ्यो न भिद्यते न तत् गन्धवत्, यथा, जलम् । न चेयं तथा । तस्मान्न तथेति । अत्र यत् गन्धवत्**

---

सर्वनिष्ठतयाऽभिधेयत्वाभावस्य कुत्रापि वक्तुमशक्यत्वात् साध्याभावेत्यप्रसिद्धम् । प्रमेयत्वरूपहेतोरपि सर्वनिष्ठतया हेतावभावप्रतियोगित्वरूपव्याप्तिर्दुर्वचा । अतो व्यतिरेकव्याप्तिर्नात्र सम्भवतीति भावः । अत्र सर्वनिष्ठत्वोपपादनं साध्यमात्रस्यैवापेक्षितम् । हेतौ तदुपपादनं तु वस्तुतः प्रकृतहेतोरपि तादृशत्वात् । असर्वनिष्ठोऽपि केवलान्वयिहेतुर्भवति यथा घटोऽभिधेयो द्रव्यत्वादिति । असर्वनिष्ठं साध्यं सर्वनिष्ठश्च हेतुर्यदि विवक्ष्यते, स हेतुरसद्धेतुरेव स्यादिति न तादृशस्य लक्ष्यत्वम् । तथा च केवलान्वयिसाध्यनिरूपितव्याप्तिमत्त्वं केवलान्वयिलिङ्गलक्षणम् । अत्र केवलान्वयित्वमत्यन्ताभावाप्रतियोगित्वम् । न च गगनाभावस्य केवलान्वयित्वं न स्यात् गगनं प्रति प्रतियोगित्वादिति वाच्यम् । गगनाभावाभावस्य गगनरूपतया हि गगनाभावस्य गगनात्मकात्यन्ताभावप्रतियोगित्वम् वक्तव्यम् । गगनाभावाभावश्चाप्रसिद्ध इति कुतो गगनरूपत्वं तस्य ? कुतस्तरां च गगनाभावस्य प्रतियोगित्वमिति । पूर्वमन्वयिस्थलीयोदाहरणोपनयनिगमनप्रयोगरीतेर्दर्शितत्वात्केवलान्वयिनिरूपणावसरे तद्विशदमनुक्त्वा 'घटोऽभिधेयः प्रमेयत्वात् पटव'दित्येतावदुक्तवान् । व्यतिरेकिस्थले तद्रीतेरप्रदर्शितत्वादत्रैव विशदमाह **यथे**त्यादिना । **इतरेभ्यो न भिद्यते** इतरप्रतियोगिकभेदाश्रयत्वाभाववत् । **न गन्धवत्** गन्धवत्प्रतियोगिकभेदवत् । अत्रेतरभेदाभाववद्रूपतच्छब्दार्थमुद्दिश्य गन्धवद्भेदविधाने इतरभेदाभावव्यापको गन्धवद्भेद इति लभ्यते । गन्धवद्भेदश्च गन्धाभाव एव । अतः प्रकृतव्यतिरेकव्याप्तिलाभः । **न चेयं तथा** पृथिवी गन्धाभाववती न । **तस्मान्न तथे**ति । (गन्धाभाववद्भिन्नत्वात्) गन्धवत्त्वादितरभेदाभावव-

**तदितरभिन्नं इत्यन्वयदृष्टान्तो नास्ति । पृथिवीमात्रस्य पक्षत्वात् । सन्दिग्धसाध्यवान् पक्षः, यथा धूमवत्त्वे हेतौ पर्वतः ।**

स्तीनेत्यर्थः । ननु 'हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमन'मिति सूत्रे (न्या १--१--३९) उदाहरणोपनयद्वैविध्येऽपि निगमनद्वैविध्यं नास्तीति भाषितत्वादन्वयव्याप्तिस्थल इव तस्मात्तथेत्येतावदेव निगमनं वक्तुमुचितमिति चेदुच्यते हेतुनिर्देशपुरस्सरं प्रतिज्ञावाक्यं तादृशानुपूर्वीकमेव निगमनेऽपि घटनीयमित्येव भाष्याशयः । यदि तु प्रतिज्ञागतानुपूर्वीमुपेक्ष्य प्रतिज्ञार्थबोधकशब्दान्तरघटनेऽपि नातीव बाधकमिति 'तस्मात्तथे'ति तथाशब्दघटनेनान्वयिनिगमनमुच्यते, तर्हि व्यतिरेकिनिगमनेऽर्थस्पष्टत्वाय 'न तथे'ति प्रयोगेऽपि न किञ्चिद्बाधकमिति ग्रन्थकाराशयः । नन्वन्वयव्याप्तिरहितत्वे सति व्यतिरेकव्याप्तिमत्त्वरूपं केवलव्यतिरेकिलक्षणमसम्भवि । वस्तुतो गन्धवत्त्वं यत्र तत्रेतरभेदसत्त्वेनान्वयव्याप्तेरक्षतत्वादित्यत्राह **अत्रे**ति । अयं भावः—यद्यप्यन्वयव्याप्तिरस्ति, अथाप्यनुमितेः पूर्वं तद्ज्ञानं न भवति । दृष्टान्ताभावे व्याप्तिनिश्चयासम्भवात् । प्रकृते गन्धवतः सर्वस्य पक्षत्वेन पक्षातिरिक्तस्य हेतुसाध्याधिकरणस्याभावान्न व्याप्तिनिश्चयः । अतोऽन्वयव्याप्तिशून्यत्वस्थाने निश्चितान्वयव्याप्तिशून्यत्वेति निवेशः कार्यः । यद्वा प्रकृतपक्षातिरिक्तावृत्तिसाध्यनिरूपितव्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकिलक्षणं वाच्यमिति । **पृथिवीमात्रस्य** सर्वस्या अपि पृथिव्याः । ननु पृथिव्याः पक्षत्वमप्यस्तु, तथा दृष्टान्तत्वमपि । तत् कथमन्वयदृष्टान्तो नास्तीत्युच्यत इत्याशङ्कायां 'दृष्टान्तो हि सपक्षः; स कथं पक्ष' इति बोधयितुं पक्षादिकं विविच्य दर्शयति **सन्दिग्धे**ति । सन्देहप्रकारीभूतं साध्यं प्रकारतयाऽस्यास्तीति सन्दिग्धसाध्यवान् । मतुबर्थः सम्बन्धी प्रकृते विशेष्यतावान् सन्देहप्रकारत्वविशिष्टसाध्यनिरूपितविशेष्यतावान् साध्यनिष्ठसन्देहप्रकारतानिरूपितविशेष्यतावानिति यावत् । तत्त्वं पक्षलक्षणम् । **धूमवत्त्वे हेतौ**

**निश्चितसाध्यवान् सपक्षः । यथा, तत्रैव महानसः । निश्चितसाध्याभाववान् विपक्षः । यथा, अत्रैव महाह्रदः । एवं सद्धेतवो निरूपिताः ।**

---

**पर्वतः** धूमवत्त्वहेतुस्थलीयपर्वतः । तत्स्थलीयत्वं च तद्ज्ञानविषयत्वम् । तथा च हेताविति सप्तम्या ज्ञानविषयत्वरूपसम्बन्धोऽर्थ आश्रयतया पर्वते ऽन्वेति । धूमवत्त्वाभिन्नहेतुविषयकज्ञानविषयताश्रयपर्वतो यत्प्रकारकवि-शिष्ट इति बोधः । निश्चितेति निश्चयप्रकारेत्यर्थः । मतुबर्थो विशे-ष्यः । पूर्ववत् साध्यनिष्ठनिश्चयप्रकारतानिरूपितविशेष्यितावत्त्वं सपक्ष-लक्षणम् । तत्र धूमरूपहेतौ । तथा च तादृशसन्देहस्थलं निश्चयस्थलं च न युगपदेकं भवितुमर्हतीति भावः । एवं पक्षदृष्टान्तभेदं प्रदर्श्य प्र-सङ्गाद्व्यतिरेकदृष्टान्तरूपविपक्षमपि व्युत्पादयति निश्चितेति । निश्चयप्रका-रेति साध्याभावान्वयि । एवं लिङ्गत्रैविध्यनिरूपणेन व्याप्तिभेदस्तदधीन-परामर्शभेदश्च दर्शितः । तथा चेदृशव्याप्तिविशिष्टलिङ्गपरामर्शोऽनुमिति-करणमिति सिद्धम् ।

अथास्य, न वस्तुतस्साध्यनिरूपिता या व्याप्तिर्वस्तुतस्तद्वान् यो हेतु-र्वस्तुतस्तद्वत्पक्षविषयकज्ञानत्वेन रूपेण, परामर्शस्य कारणत्वम् । तथा सति ह्रदो धूमव्याप्यवह्निमानिति भ्रमात्मकपरामर्शात् ह्रदो धूमवानिति भ्रमा-त्मकानुमितेरनुत्पत्तिप्रसङ्गात् । अतः परामर्शे यस्य यस्य यद्यदंशे प्रका-रत्वं, तत्तन्निष्ठप्रकारतानिरूपिततत्तन्निष्ठप्रकारतेति रीत्या विशेषितहेतुनिष्ठ-प्रकारतानिरूपितपक्षनिष्ठविशेष्यताशालिनिश्चयत्वेन कारणत्वम् । तत्र च स्थले वस्तुतस्तस्य तस्य पदार्थस्य सम्बन्धाभावेऽपि भ्रमात्मकज्ञानेन तस्य तस्य तत्तदंशे प्रकारतया ग्रहणान्न तत्र कारणत्वहानिरिति कारणतावच्छेद-करूपशिक्षाप्रदर्शनमभिसंधाय वस्तुतो व्याप्तिपक्षधर्मतावैशिष्ट्यशून्यान् अ-

**सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः ।**

**सव्यभिचारोऽनैकान्तिकः । स त्रिविधः, साधारणासाधारणानुपसंहारिभेदात् । तत्र साध्याभाववद्वृत्तिः साधारणः । यथा पर्वतो वह्निमान् प्रमेयत्वात्, अत्र प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात् ।**

**सर्वसपक्षविपक्षव्यावृत्तो हेतुः असाधारणः । यथा, शब्दो**

---

सद्धेतूनपि निरूपयति **सव्यभिचारे**त्यादिना । **हेत्वाभासा** इति । आभासन्त इत्याभासा ईषद्भासमानाः स्वगतयथावस्थितधर्मं विना भासमाना भ्रमविषयाः । हेतव आभासाः, अभेदसम्बन्धेन हेतुप्रकारकभ्रमविषयाः व्याप्तिपक्षधर्मताविशिष्टत्वरूपेहेतुत्वभ्रान्तिविषया इति यावत् । व्यभिचारेण सह वर्तत इति **सव्यभिचारः**, व्यभिचारोऽन्यत्रापि सम्बन्धः प्रकृतसाध्यवदन्यवृत्तित्वं, तद्विशिष्ट इत्यर्थः । इत्थं च साधारण एव सव्यभिचारः स्यात् । अतस्तदर्थमाह **सव्यभिचार** इति । **अनैकान्तिक** इति । एकश्चासावन्तश्चैकान्तः 'नित्यत्वमप्येकोऽन्तः, अनित्यत्वमप्येकोऽन्त' इति भाष्यानुसारात् । अन्तो निश्चेतव्यो धर्मः कोटिः । एकान्ते भव एककोटिस्थः एककोटिसमानाधिकरणः एकधर्मनिश्चयप्रयोजक इति यावत् । न ऐकान्तिक एकधर्मनिश्चयाप्रयोजकोऽनेकधर्मज्ञानप्रयोजकः संशयप्रयोजक इति यावत् । तथा च साध्यतदभावसंशयप्रयोजकत्वमनैकान्तिकत्वमित्युक्तम् । साधारणः साध्यतदितरसम्बन्धी साध्यवद्वृत्तिः साध्याभाववद्वृत्तिश्चेत्यर्थः । तत्र साध्यवद्वृत्तित्वांशं व्यर्थं परित्यज्याह **साध्ये**ति । **प्रमेयत्वादि**ति । 'इत्यत्र प्रमेयत्व'मिति शेषः । **अत्र** अस्मिन् प्रयोगे । **असाधारणः** पक्षासाधारणः पक्षेतरावृत्तिः सन् पक्षवृत्तिः पक्षेतरश्च सपक्षो विपक्षश्चेत्यभिसन्धाय निष्कृष्टमाह **सर्वे**ति । सर्वेभ्यः सपक्षेभ्यो विपक्षेभ्यश्च व्यावृत्तः । सपक्षविपक्षशब्दार्थौ प्रागुक्तौ । **व्यावृत्तो**ऽभावप्रतियोगी ।

**नित्यः शब्दत्वात् , अत्र शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यो व्यावृत्तम् , शब्दमात्रवृत्ति ।**

**अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा सर्वं अनित्यं प्रमेयत्वात् । अत्र सर्वस्यापि पक्षत्वात् दृष्टान्तो नास्ति ।**

**साध्याभावव्याप्तो हेतुः विरुद्धः । यथा , शब्दो नित्यः कार्यत्वात् , अत्र कार्यत्वं नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ।**

**यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते सः सत्प्रतिपक्षः ।**

---

सद्धेतुवारणाय सपक्षव्यावृत्तत्वम् विरुद्धवारणाय सर्वविपक्षव्यावृत्तत्वम् । सर्वसपक्षव्यावृत्तत्वमेवालम् , दुष्टसङ्करेऽपि दोषासङ्करात् । अनुपसंहारीत्यस्योपसंहारकभिन्न इत्यर्थः । उपसंहारकत्वं दृष्टान्तबलेन साध्यस्य पक्षे सम्पादकत्वम् । तथा च दृष्टान्तप्रयुक्तसाध्यानुमितिजनकताशून्योऽनुपसंहारीत्यर्थः । तत्र लाघवाद्दृष्टान्तरहित इत्येवालम् । परं तु केवलान्वयिनि केवलव्यतिरेकिणि चातिव्याप्तिवारणाय दृष्टान्तसामान्यराहित्यं विवक्षणीयमिति दर्शयति अन्वयेति । दृष्टान्तो निश्चितस्थलं निश्चयविशेष्य इति यावत् । तथा च साध्यान्वयप्रकारकनिश्चयविशेष्यराहितत्वे सति साध्यव्यतिरेकप्रकारकनिश्चयविशेष्यराहित इत्यर्थः । दृष्टान्तराहित्यं चैकज्ञानविषयत्वसम्बन्धेन दृष्टान्ताभाववत्त्वम् । तच्च साध्यादिप्रकारकनिश्चयविषयविषयकज्ञानाविषयत्वम् । तथा च लाघवात् साध्यप्रकारकनिश्चयाविषयत्वे सति साध्याभावप्रकारकनिश्चयाविषयत्वमनुपसंहारित्वम् । केवलान्वयिस्थले केवलव्यतिरेकिस्थले च साध्यतदभावप्रकारकनिश्चयविषयत्वं हेतोः परामर्शदशायामस्ति । तद्वदत्र नास्तीति लक्षणसमन्वयः । हेतुः हेतुत्वेनाभिमत इत्यर्थः तस्य सद्धेतुत्वाभावात् । इदं च स्वरूपकीर्तनम् ; न लक्षणघटकम् । सत्प्रतिपक्ष इत्यस्य सन् प्रतिपक्षो यस्येति विग्रहः । प्रतिपक्षपदस्य साध्याभावसाधकहेत्वन्तरमित्यर्थः । तदाह यस्येति । अ-

यथा, शब्दो नित्यः श्रावणत्वात्, शब्दोऽनित्यः कार्यत्वात् घटवत्।

असिद्धस्त्रिविधः, आश्रयासिद्धः स्वरूपासिद्धः व्याप्यत्वासिद्धश्चेति । आश्रयासिद्धो यथा, गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः, स च नास्त्येव !

स्वरूपासिद्धो यथा, शब्दो गुणः चाक्षुषत्वात् रूपवत् । अत्र चाक्षुषत्वं शब्दे नास्ति, शब्दस्य श्रावणत्वात् ।

सोपाधिको व्याप्यत्वासिद्धः । साध्यव्यापकत्वे सति साधनाव्यापकत्वं उपाधित्वम् । साध्यसमानाधिकरणात्यन्ताभावाप्रति-

---

सिद्धत्वमसिद्धयाश्रयत्वमभावाश्रयत्वम् । अभावनिरूपिताश्रयत्वं चैकज्ञानविषयत्वसम्बन्धेन । अभावश्चाश्रय-स्वरूप-व्यापकत्वान्यतमप्रतियोगिकः । आश्रयासिद्ध इति । आश्रयेण स्वाश्रयेण प्रकृतहेत्वाश्रयेण पक्षेणासिद्ध इति । गगनारविन्दम् गगनजन्यारविन्दम् । सरोजेति सरोजन्येत्यर्थः । सोपाधिक इति उपाधिविशिष्ट इत्यर्थः । वैशिष्ट्यं च व्यभिचारित्वसम्बन्धेन । कः पुनरुपाधिरित्यत्राह साध्येति । सतीति समभिव्याहृतपदघटकधात्वर्थसत्ता सप्तम्यर्थः । साधनाव्यापकत्वविशेषणतया सदित्येकं पदमध्याहार्यम् । सप्तम्यर्थसत्तायाः सामानाधिकरण्यसम्बन्धेन सदित्यत्र सत्तायामन्वयः । सामानाधिकरण्यं चोभयोर्निरूपकतासम्बन्धेन । तथा च साध्यव्यापकत्वविशिष्टं साधनाव्यापकत्वमुपाधित्वम् । साध्यसमानाधिकरणेति । साध्यपदं साध्याधिकरणलाक्षणिकम् । समानपदमभिन्नार्थकम् । समानमधिकरणं यस्य । तथा चाधिकरणपदं साध्याधिकरणवृत्तौ लाक्षणिकम् । पूर्वपदं तात्पर्यग्राहकम् । तादृशो योऽत्यन्ताभावस्तदप्रतियोगित्वं तं प्रति प्रतियोगित्वाभावः । साधनाव्यापकत्वमित्यत्राव्यापकत्वं तादृशात्यन्ताभावप्रतियोगित्वाभावाभावः । तथा निवेशे

**योगित्वं साध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् । यथा, पर्वतो धूमवान् वह्नेरित्यत्रार्द्रेन्धनसंयोगः उपाधिः । यत्र धूमः तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता । यत्र वह्निः तत्रार्द्रेन्धनसंयोग इति नास्ति, अयोगोलके आर्द्रेन्धनसंयोगाभावात् । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोगः उपाधिः । सोपाधिकत्वात् वह्निमत्वं व्याप्यत्वासिद्धम् ॥**

**यस्य साध्याभावः प्रमाणान्तरेण निश्चितः सः बाधितः । यथा, वह्निः अनुष्णः पदार्थत्वात् जलवत् । अत्रानुष्णत्वं साध्यं, तदभावः उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बोध्यम् ॥**

व्याख्यातमनुमानम् ॥

---

गौरवादाह **साधनेति** । **यत्र** यावत्स्वधिकरणेषु । **इति नास्ति** एतदानुपूर्वीकशब्दगम्यं वह्निव्यापकत्वं नास्ति । कस्मादित्यत्राह**योगोलक** इति । वह्निमतीत्यादिः । **उपाधिः** उपाधिशब्दवाच्यः । **यस्येति** । साध्य एतदन्वयः । **प्रमाणान्तरेण** प्रत्यक्षादिना **निश्चितः** पक्ष इति शेषः । यदीयसाध्यप्रतियोगिकाभावः प्रत्यक्षादिजन्यपक्षविशेष्यकनिश्चयविषय इत्यर्थः । **प्रमाणान्तरेण निश्चित** इतीदमविवक्षितम् । साध्याभाववत्पक्षको बाधित इत्येतावदेव विवक्षितम् । **स्पार्शनप्रत्यक्षेणेति** । नेदं प्रमाणान्तरपदसमानार्थकम्, तस्य प्रमितिकरणत्वगिन्द्रियादिपरत्वात् । **गृह्यते** विषयीक्रियते । **इति बोध्यमिति** । उष्णत्वं स्पार्शनप्रत्यक्षप्रयोज्यविषयताश्रयत्वनिरूपितप्रकारिताश्रयबोधविषय इत्यर्थः । एवं हेत्वाभासनिरूपणेन परामर्शस्य निरूप्यनिरूपकभावापन्नविषयताशालित्वेन कारणत्वमिति कारणतावच्छेदकस्वरूपं शोधितम् । निगमयति **व्याख्यातमिति** । प्रत्यक्षानुमानेत्येतद्घटकमनुमानं स्वरूपकारणादिनिरूपणेन वृत्तविशदनिरूणपविषय इत्यर्थः ।

इत्यनुमानपरिच्छेदः ।

---

**उपमितिकरणमुपमानम् । संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानम् । अतिदेशवाक्यार्थस्मरणं व्यापारः ।**

**तथा हि । कश्चित् गवयपदार्थमजानन् कुतश्चिदारण्यक-पुरुषात् गोसदृशो गवयः इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशपिण्डं पश्यति ।**

---

अथ प्रत्यक्षानुमानोपमानोपमानेति वाक्ये उपमानपदग्राह्यं दर्शयितुमुपमानं निरूपयति उपमितीति । उपमानमुपमानपदवाच्यम् । उपमितिः केत्यत्राह संज्ञेति । अनेनोपमितिस्तुल्यत्वज्ञानं न प्रकृते विवक्षितामिति सूचितम् । संज्ञा वाचकशब्दः । संज्ञि वाच्यार्थः । संज्ञासंज्ञिनोः सम्बन्धो वाच्यवाचकभावरूपस्तस्य ज्ञानम् । तथा च पदवाच्यत्वप्रकारकज्ञानविशेष उपमितिशब्दवाच्य इति भावः । तत्करणम् तस्याः करणम् । सादृश्यज्ञानमिति । केचित्सादृश्यविशिष्टपिण्डदर्शनं करणमित्याहुः । अन्येऽतिदेशवाक्यार्थशाब्दबोधः करणमिति । अपरेऽतिदेशवाक्यार्थस्मरणमव्यवहितपूर्ववर्तित्वात्करणमिति । सर्वसाधारण्याय ज्ञानमिति । उपपादयति तथा हीति । तथा करणत्वरूपप्रकारविशिष्टम् । हिशब्दार्थो हेतुत्वम् । तथा च सादृश्यज्ञानं वक्ष्यमाणार्थनिष्ठहेतुतानिरूपकतत्करणत्वरूपप्रकारशालीति बोधः । कश्चित् ग्रामीणः । कुतश्चित् कस्मादपि । आरण्यकपुरुषविशेषणमेतत् । चिदादिशब्दसमभिव्याहृतः किंशब्दो बुद्धिस्थव्यक्तिवचनः । चिदादिपदं तात्पर्यग्राहकम् । श्रुत्वेति । गोसदृशो गवयशब्दवाच्य इति तदर्थं बुद्ध्वेति शेषः । क्त्वाप्रत्ययस्योत्तरकालिकत्वमर्थः । तथा च ध्वंसः क्त्वाप्रत्ययार्थः श्रवणस्य स्वप्रतियोगिकत्वसम्बन्धेन तत्रान्वयः । ध्वंसस्य कालिकसम्बन्धेन बोधेऽन्वय इत्युक्तं भवति । एवं क्त्वाल्यप्प्रयोगे सर्वत्रानुसन्धेयम् । अत्र 'गोसदृशं पिण्डं पश्यन् वाक्यार्थं स्मरती'ति ऋजुः पाठः । अत्राजानन् श्रुत्वेति निर्देशादज्ञानश्रवणयोः

**तदनन्तरं अयं गवयपदवाच्यः इत्युपमितिरुत्पद्यते ।**

**व्याख्यातमुपमानम् ।**

---

समानकालिकत्वं, श्रुत्वा वनं गत इति क्त्वाप्रत्ययेन श्रवणोत्तरगमनम्, वनं गतः पश्यन्निति क्तप्रत्ययेन पिण्डदर्शने वनगमनानन्तर्यं, पश्यन् स्मरतीति शत्रा दर्शनस्मरणयोः समानकालिकत्वं च दर्शयति । तथा चायं भावः—पिण्डदर्शनबलाद्यदि वाक्यार्थस्मरणम्, तदा तदपि कारणम् । यदि गवयबुभुत्सया वनं प्रति गच्छतो दर्शनात् प्रागेव वाक्यार्थस्मरणं तदनन्तरक्षणे च पिण्डदर्शनं भवति, तदा तयोर्युगपदेकस्मिन् क्षणे वर्तमानत्वात् कारणत्वमक्षतमिति । तदनन्तरमिति पिण्डदर्शनवाक्यार्थस्मरणानन्तरक्षण इत्यर्थः । अयमिति न पुरोवर्तिव्यक्तिमात्रपरम्, तथा सति गवयव्यक्त्यन्तरेषु गवयपदवाच्यत्वग्रहासम्भवप्रसङ्गात् । अतः पुरोदृष्टं यद्गवयत्वं तदवच्छिन्नसामान्यपरमिति ध्येयम् ।

इत्युपमानपरिच्छेदः ।

**आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता । वाक्यं तु पदसमूहः । शक्तं पदम् । अस्मात् पदादयमर्थो बोद्धव्य इतीश्वरसङ्केतः शक्तिः ।**

---

प्रत्यक्षानुमानोपमानशब्देत्यत्र शब्दपदेन न ध्वन्यात्मकशब्दः, न केवलवर्णात्मकः, न केवलपदरूपोऽपि शब्दो ग्राह्यः तेषां शाब्दबोधाजनकत्वात् । नाप्याप्तानाप्तसाधारणं वाक्यमात्रम्, अनाप्तवाक्येऽपि शाब्दप्रमाजनकत्वाभावात्, प्रमाकरणस्यैव विभजनादित्यभिप्रेत्याहाप्तवाक्यमिति । आप्तस्य वाक्यम् । षष्ठ्यर्थ उच्चरितत्वरूपः सम्बन्धः । नायमाप्तशब्दः सामान्यतः सखिमात्रवचनः, नापि यथार्थद्रष्टृमात्रवचनः, तदुक्तवाक्यस्यापि विप्रलम्भनदशायामविश्वसनीयत्वादित्याशयेनाह आप्तस्त्विति । यथार्थेति । यथाभूतोऽर्थो यथार्थोऽबाधितोऽर्थो मिथःसम्बन्ध्यर्थः, तस्य वक्ता । षष्ठ्यर्थो विषयित्वं ज्ञानान्वयि । वक्ता ज्ञानानुकूलशब्दप्रयोगाश्रयः । वाक्यं नाम नावश्यं तिङन्तसहितसुबन्तमेव, किं तर्हि सुबन्तसमुदायमात्रमपि । नीलो घट इत्येतावतोऽपि वाक्यत्वादित्यभिप्रेत्याह वाक्यन्त्विति । यद्यप्यनाकांक्षितासन्निहितानन्वितार्थकपदसमुदायो वाक्यं न भवति । अतः पदसमूहत्वमात्रं न लक्षणम् । अथाप्याप्तसम्बन्धोक्त्यैव तादृशपदसमूहवारणात्प्रकृते वाक्यपदस्यैतावानर्थः पर्याप्त इत्याशयः । अत्र पदशब्देन न 'सुप्तिङन्तं पद'मिति परिभाषितस्य ग्रहणम् । किं तु पद्यते गम्यतेऽनेनार्थ इति पदमित्याशयेनाह शक्तमिति । का पुनरियं शक्तिः अत्राह अस्मादिति । पदादिति पञ्चम्यर्थो जन्यत्वं बोधेऽन्वेति । अयमर्थ इदम्पदजन्यबोधविषय इत्यर्थः । इति शब्दार्थो विषयित्वम् । अर्थपदार्थस्य विषयितायामन्वयः । तस्याः सङ्केते इच्छायामन्वयः । इदम्पदजन्यबोधविषयत्वविशिष्टेदमर्थनिरूपितविषयितावदीश्वरीयेच्छा शक्तिपदवाच्येति । घटपदाद्धटत्वरूपजातिविशिष्टोऽर्थो बोद्धव्यः पटपदात् पटत्वरूपजात्यवच्छि-

**आकांक्षा योग्यता सन्निधिश्च वाक्यार्थज्ञानहेतुः ।**

न्नं बोद्धव्यमित्येवं तत्तत्पदबोद्धव्यत्वेन तत्तदर्थविषयिणीच्छैव तत्तत्पदस्य तत्त-दर्थे शक्तिरित्यर्थः । घटपदस्य घटे शक्तिरित्यत्र शक्तिपदं बोद्धव्यत्वप्रका-रकेच्छार्थकम् । घटपदस्येति षष्ठ्या जन्यत्वरूपसम्बन्धोऽर्थः । तस्य बोधेऽन्वयः । घट इत्यत्र सप्तम्यर्थो विशेष्यत्वमिच्छान्वयि । तथा चा-ऽऽसृष्टेरुपयुज्यमानेष्वर्थेषु प्रयुज्यमानाश्शब्दा नार्वाचीनपुरुषसङ्केतवशो-त्पन्ना भवितुमर्हन्तीतीश्वरसङ्केत एव तस्य तस्य शब्दस्य तत्तदर्थबोधकत्वे निमित्तम् । अर्वाचीनेच्छाग्रहण इच्छाप्रकारस्य नियन्त्रणासम्भवेन यस्मात्क-स्मादपि पदाद्यं कमप्यर्थं लोको बोधयितुमिच्छेत् । योगिनो महर्षयोऽपि मिथः समबलाः स्वाच्छन्द्येन शब्दान् प्रयुञ्जानाः प्रबन्धान् प्रणीतवन्तः स्युः, येष्व-स्माकमेदमर्थ्यमशक्यनिर्धारणम् । किञ्च वेदशब्देभ्य एव विशिष्टस्याप्यर्थस्य सृष्टतया वेदस्य चेश्वरकृततया तत्र तत्रार्थे प्रयुज्यमानास्त एव वैदिकशब्दा ईश्वरसङ्केतिता इतोश्वरसङ्केत एव शक्तिर्वक्तुमुचितेत्यभिप्रेत्येश्वरेत्युक्तम् । अत्र यद्यप्याप्तवाक्यमेव प्रमाणम् । अथाप्याप्तसम्बन्धित्वेन ज्ञायमानतया न शाब्दबोधकरणत्वं शब्दस्य । अपि तु केवलं तत्तच्छब्दरूपेणैव । ननु कथं तर्हि 'गौरश्वः' 'अग्निना सिञ्चे'दित्यादिश्रवणे प्रायशो बोधो न जायत इति चेन्न, शब्दस्य केवलं कारणत्वाभावात् आकाङ्क्षादीनामपि सहकारि-त्वादित्याशयान आकाङ्क्षादिसहकारि दर्शयति आकाङ्क्षेति । हेतुः प्रयोजको जनकज्ञानविषय इत्यर्थः । आकाङ्क्षाज्ञानं योग्यताज्ञानं सन्निधि-ज्ञानं च शाब्दबोधे सहकारिकारणमित्युक्तं भवति । शाब्दप्रमास्थले वस्तुत आकांक्षादेः सद्भावेऽपि तद्भ्रमस्थले तदभावात् तत्राकांक्षादिज्ञानस्यैव भ्रमा-त्मकस्य कारणत्वमावश्यकमित्यविशेषात् सर्वत्र तद्ज्ञानमेव कारणमिति । अत्राकांक्षा नाम नेच्छा, पदस्य पदान्तराकांक्षेत्यत्रेच्छाया दुर्वचत्वात्, अ-

**पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वं आकांक्षा । अर्थाबाधो योग्यता । पदानामविलम्बेनोच्चारणं सन्निधिः ।**

चेतनपद इच्छाया अभावात् । अतोऽन्यैवेयमित्याह पदस्येति । षष्ठ्यर्थ आधेयत्वमननुभावकत्वान्वयि । अन्यत् पदं पदान्तरम् । प्रकृतपदभिन्नपदमित्यर्थः । व्यतिरेकोऽभावः । प्रयुक्तं प्रयोज्यम् , अधीनमिति । प्रयुक्तपदमिह समासे प्रकृतपदभिन्नपदप्रतियोगिकाभावप्रयोज्यरूपार्थलाक्षणिकम् । पूर्वं तात्पर्यग्राहकम् । अस्याननुभावकत्वेऽन्वयः । अन्वयस्यानुभावकत्वं पदार्थस्य पदार्थान्तरेणान्वयविषयको योऽनुभवः शाब्दबोध इति यावत् तज्जनकत्वम् ; तदभावोऽन्वयाननुभावकत्वम् । पदं ह्येकं पदान्तराभावे शाब्दबोधं न जनयति । यथा घटमानयेत्यत्राम्पदाभावे घटपदं बोधं न जनयति । आकांक्षा आकांक्षापदवाच्यम् । अत्रेदमवधेयम्—घटः कर्मत्वमानयनं कृतिरित्युक्तौ बोधो न भवति । घटमानयेत्युक्तौ भवति । तत् कस्मात् ? पूर्वत्राकांक्षाया अभावात् परत्र भावादिति वक्तव्यम् । तन्न शक्यते । पूर्वत्राम्पदाश्रवणादम्पदाभावाधीनमननुभावकत्वं घटपदस्य वर्तत इति तत्रैवाकांक्षा वर्तते । परत्राम्पदसद्भावाद्बोधस्य जायमानतयाऽननुभावकत्वरूपाकांक्षा नास्तीति । तस्मादुक्तस्याकांक्षात्वासम्भवादेवं तात्पर्यं वर्णनीयम् । यत्पदस्य यत्पदाभावेऽन्वयाननुभावकत्वं भवेत् तत्पदस्य तत्पदमिलितत्वमाकांक्षा । यथा घटपदस्याम्पदविशिष्टत्वम् । इदं च घटमानयेत्यत्रास्ति, घटः कर्मत्वमित्यत्र नास्तीति न दोष इति । अर्थेति । अर्थस्याबाधोऽसम्बन्धाभावः अर्थसम्बन्ध इति यावत् । पदार्थस्य पदार्थान्तरसम्बन्धो योग्यता । अयमर्थनिष्ठो धर्मः । प्रथमतृतीयौ तु शब्दनिष्ठाविति विवेकः । पदानामिति । इदमुच्चारणान्वयि । **अविलम्बेन** अव्यवहितत्वविशिष्टमित्यर्थः । पदस्य पदान्तराव्यवधानं सन्नि-

**आकांक्षादिरहितं वाक्यं न प्रमाणम् । यथा, गौरश्वः पुरुषो हस्तीति वाक्यं न प्रमाणम्, आकांक्षाविरहात् । अग्निना सिञ्चतीति वाक्यं न प्रमाणम्, योग्यताविरहात् । प्रहरे प्रहरेऽसहोच्चारितानि**

---

धिरिति यावत् । अव्यवधानं च पूर्वं प्रयोगेण वा पश्चात्प्रयोगेण वोभयथाऽपि ग्राह्यम् । आकांक्षादीनां शाब्दबोधहेतुत्वं तत्तदभावे शाब्दबोधाभावप्रदर्शनेन व्यतिरेकमुखेन साधयति **आकांक्षे**ति । **यथे**ति उदाह्रियत इत्यर्थः । **अकांक्षाविरहादि**ति । पञ्चम्यर्थः प्रयोज्यत्वं प्रमाणप्रतियोगिकभेदरूपे नञर्थेऽन्वेति । ननु गौरश्व इत्यत्र गवादिपदार्थस्य किमनुच्चारिततिष्ठत्यादिपदार्थान्वयेऽप्रमाणत्वमुच्यते उताश्वादिपदार्थान्वये । नाद्यः, तिष्ठत्यादिपदसन्निध्यभावेन सन्निधिरूपकारणाभावादेवाप्रमाणत्वनिर्वाहात् । नान्त्यः, गवाभेदस्याश्वे बाधितत्वेन योग्यतारूपकारणाभावादेव निर्वाहात् । अत आकांक्षा किमर्थमतिरिक्तं कारणमिति चेन्न ; नोदाहरणमादर्तव्यमिति न्यायेन 'घटः कर्मत्वमानयनं कृति'रित्युदाहरणान्तरस्यैवाभिप्रेतत्वेनादोषात् । अत्र हि, घटमानयेति वाक्ये यः प्रातिपदिकार्थो घटः यो द्वितीयार्थः कर्मत्वं यो धात्वर्थ आनयनं य आख्यातार्थः कृतिस्ते सर्वे उपस्थाप्यन्ते । सन्निधिर्योग्यता च स्तः । तथाऽपि न कथं बोध इति चेदाकांक्षा नास्तीत्येवोत्तरम् । घटपदस्यान्वयाननुभावकत्वं न कर्मत्वपदव्यतिरेकात्, किं तु अम्पदव्यतिरेकादिति । सन्निधौ पदनियमः पौर्वापर्यनियमो वा नास्ति । यथा गिरिरग्निमान्, पर्वतोऽग्निमान्, अग्निमान् गिरिरिति । आकांक्षायां तु नियमोऽस्ति । यथा घटपदोत्तरमम्पदमेव प्रयोक्तव्यम्, न कर्मत्वपदम् । तथा तत्पदमुत्तरत्रैव प्रयोक्तव्यम्, न पूर्वत्रेति । **असहोच्चारितानि** असह परस्परानधिकरणकाले । अयमेव कालो व्यक्तं दर्शितः **प्रहरे प्रहर** इति । यामे याम इत्यर्थः । अत्र व्यापकत्वगमकवीप्सा नेष्टा ।

गामानयेत्यादिपदानि न प्रमाणम्, सान्निध्याभावात् । वाक्यं द्विविधम्, वैदिकं लौकिकं चेति । वैदिकमीश्वरोक्तत्वात् सर्वमपि प्रमाणम् । लौकिकं तु आप्तवाक्यं प्रमाणम् । अन्यदप्रमाणम् । वाक्यार्थज्ञानं शाब्दज्ञानम् । तत्करणं शब्दः ।

इति शब्दपरिच्छेदः ।

---

किं त्वेकैकप्रहरवृत्तित्वमेकैकस्य पदस्य विवक्षितम् । तथा चैकप्रहरवृत्तितद्भिन्नप्रहरवृत्तिविभिन्नकालिकोच्चारणविषयीभूतानीत्यर्थः । इत्यादीत्यादिपदेन सवत्साामिति पदग्रहणम् । नन्वाप्तवाक्यस्यैव प्रमाणत्वे वेदस्य कथं प्रामाण्यम् । न खल्वसावाप्तोक्तः, अपौरुषेयत्वादिति शङ्कापरिजिहीर्षया, वेदस्य कार्त्स्न्येन प्रामाण्यनिरूपयिषया, शाब्दबोधजनकत्वं वेदस्यैवेति मतान्तरमनिष्टमित्यवजिगमयिषया च वाक्यं विभजते वाक्यमिति । वैदिकमिति वेदघटकमित्यर्थः । लौकिकं लोकस्वतन्त्रोच्चारितम् । ईश्वरोक्तत्वादिति । तस्य सर्वज्ञस्य परमकारुणिकस्य पुरुषोत्तमस्याप्तत्वादिति भावः । नन्वेकैकजन्यबोधोऽपि शब्दजन्यत्वाच्छाब्दबोध एव । तत् कथं वाक्यमेव प्रमाणमिति शङ्कां परिहरति वाक्येति । अयं भावः—प्रथमतस्तावदस्य पदस्यायमर्थ इति व्यवहारादिना शक्त्यवधारणमावश्यकम् । एवं पदपदार्थयोर्वाच्यवाचकभावसम्बन्धज्ञाने सति कदाचित्पदज्ञाने जाते एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायात् पदार्थस्मरणम् । इदं च पदार्थस्मरणं स्मृतिरूपत्वान्नानुभवः, नापि तदन्तर्गतः शाब्दबोधः । यत्पुनरेवमनेकपदार्थस्मरणानन्तरं तेषां परस्परसम्बन्धावगाहि ज्ञानम्, स एव शाब्दबोधः । तत्र च पदसमुदाय एव करणमिति । शब्द इति इदमेवाप्तवाक्यं शाब्दबोधेत्यत्र शब्दपदग्राह्यमिति भावः । एवं प्रत्यक्षानुमानोपमानशब्दपदार्था निरूपिताः । एवं च 'तत्करणमपि चतुर्विध'मिति वाक्यार्थज्ञानं निष्पादितम् ।

इति शब्दपरिच्छेदः ।

**एवं यथार्थानुभवो निरूपितः । अयथार्थानुभवः त्रिविधः, संशयविपर्ययतर्कभेदात् । एकस्मिन् धर्मिणि विरुद्धनानाधर्मप्रकारकज्ञानं संशयः । यथा, स्थाणुर्वा पुरुषो वेति ।**

---

एवमादौ विभक्तानां द्रव्यादिविशेषाणां क्रमेण निरूपणमारभ्य द्रव्यनिरूपणं समाप्य गुणनिरूपणावसरे बुद्धिं विभज्य तत्र यथार्थानुभवनिरूपणावसरे तच्चातुर्विध्यस्थापनाय तत्करणचातुर्विध्यप्रपञ्चं विधायावसरप्राप्तं परिशिष्टबुद्ध्यादिनिरूपणमारप्स्यमानो यथार्थानुभवनिरूपणं निगमयति एवमिति । एवम् उक्तप्रकारेण । निरूपितः निरूपणं ज्ञानानुकूलव्यापारः । यथार्थानुभव उक्तप्रकारप्रकारकज्ञानानुकूलव्यापारजन्यफलाश्रय इति बोधः । विपर्ययेति । तर्कान्यविपर्ययेत्यर्थः ।

संशयं लक्षयति एकस्मिन्निति । धर्मिणीति विशेष्यत्वं सप्तम्यर्थो ज्ञानान्वयि । विरुद्धा नाना धर्मा विरुद्धौ नानाधर्मौ वा तद्वैशिष्ट्य तत्सम्बन्धस्तस्य ज्ञानम् । षष्ठ्यर्थः संसर्गित्वम् । एकधर्मिनिरूपितविशेष्यताश्रय-विरोधिविशिष्टानेकधर्मप्रतियोगिकसंसर्गनिरूपितसंसर्गिताश्रयज्ञानं संशयपदवाच्यमिति बोधः । एकधर्मिविशेष्यकविरोधिविशिष्टानेकधर्मप्रकारकज्ञानत्वं संशयत्वम् । स्थाणुर्वेत्यादि । अयमिति पूरणीयम् । इतीति । ज्ञानमिति शेषः । इतिशब्दार्थो विषयित्वरूपो धर्मः । वाशब्दः समभिव्याहृतपदार्थविरोधार्थकः । इदमर्थस्य, स्थाणोः पुरुषस्य च विषयितारूपेतिशब्दार्थेऽन्वयः । तथा चाभेदसम्बन्धेन पुरुषविरोधाश्रयस्थाणुनिरूपितविषयित्वं यत्, यच्चाभेदसम्बन्धेन स्थाणुविरोधाश्रयपुरुषनिरूपितविषयित्वम्, यच्चेदमर्थनिरूपितविषयित्वं तदाश्रयसंशय इत्यर्थः । अथवेतिशब्द आनुपूर्व्यर्थकः, तस्य संशये स्वावच्छिन्नशब्दज्ञानप्रयोज्यत्वसम्बन्धेनान्वयः । इदमर्थविशेष्यक-स्थाणुत्वविरुद्धपुरुषत्व,पुरुषत्वविरुद्धस्थाणु-

**मिथ्याज्ञानं विपर्ययः । यथा, शुक्तौ इदं रजतं इति ।**

---

त्वप्रकारकसंशय इति यावत् । अयं भावद्वयकोटिकसंशयः । एवं भावाभावकोटिकसंशयोऽपि भवति, यथा स्थाणुर्न वेति । पर्वतो वह्निमान् ह्रदश्च वह्न्यभाववानिति ज्ञानेऽतिव्याप्तिरित्येकधर्मिविशेष्यकत्वनिवेशः । रामः श्यामोऽभिरामश्चेति निश्चयेऽतिप्रसङ्ग इति विरोधिविशिष्टेति । पर्वतो वह्निमानिति निश्चयवारणाय नानेति । घटो नीलो वा रक्तो वा भवत्विती-च्छावारणाय ज्ञानेति । विपर्ययं लक्षयति मिथ्येति । विपर्ययः तर्कान्यो विपर्ययशब्दवाच्यः मिथ्याज्ञानं तर्कान्यमिथ्याज्ञानमित्यर्थः । मिथ्यात्वं वस्तुनि वचने ज्ञाने च भवति । तत्र वस्तुनि मिथ्यात्वं स्वाभावाधिकरणे भासमानत्वम् ; मिथ्या वचनमित्यादौ वचने मिथ्यात्वं तदभाववति तत्प्रकारकज्ञानानुकूलशब्दत्वम् ; ज्ञाने मिथ्यात्वं च तदभाववति तत्प्रकारकत्वम् । अतस्तदभाववति तत्प्रकारकत्वं मिथ्यापदार्थः । इदं तर्केऽप्यस्तीति तर्कान्यत्वनिवेशः । यद्यपि तर्कस्य विपर्ययत्वमिष्टमेव । अथाप्यत्र पार्थक्येन तद्विभजनात् प्रकृतविपर्ययपदेनैव विवक्षितमिति । तस्य पृथग्विभज्य दर्शनं कुत इति चेत् विपरीतज्ञानत्वेऽपि तस्य प्रमाणेनार्थनिर्णये सम्पादनीये क्वचिदुपकारकत्वमस्तीति विशेषाध्यवसायेन तत्राऽऽदरातिशयादिति । यद्यपीदं लक्षणं संशयेऽप्यस्ति, स्थाणौ अयं स्थाणुर्वा पुरुषो वेति संशयस्य पुरुषत्वाभाववति पुरुषत्वप्रकारकत्वात् तर्कान्यत्वाच्च, अथापि संशयान्यत्वस्यापि निवेशान्न दोषः । तथा च तदभाववति तद्विरुद्धधर्माप्रकारकतत्प्रकारक-तर्कान्य-ज्ञानत्वं प्रकृते विपर्ययत्वम् । एवमेव पूर्वं यथार्थानुभवलक्षणेऽपि संशयवारणाय तद्विरुद्धधर्माप्रकारकत्वं विशेषणं देयमिति ध्येयम् । उदाहरति यथेति । इतोऽत्यनन्तरं विपर्यय इति शेषः । तत्र शुक्ताविति सप्तम्यर्थविशेष्यिताया अन्वयः । शुक्तिविशेष्यकमपि ज्ञानं न शुक्ति-

**व्याप्यारोपेण व्यापकारोपः तर्कः। यथा, यदि वह्निः न स्यात् तर्हि धूमोऽपि न स्यादिति।**

---

त्वेन शुक्तिं गृह्णाति, तथा सति रजतभेदग्रहणासम्भवात्। अपि त्विदंत्वेन पुरोवर्तित्वेन तां गृह्णातीतीदमित्यनेन दर्शितम्। इदमित्यनेन वास्तवरजतं न ग्राह्यम्। तथा सति विपर्ययत्वाभावप्रसंगादिति ज्ञापनाय शुक्ताविन्युक्तम्। तर्कं लक्षयति **व्याप्येति**। व्याप्यस्यारोपस्तेन। **आरोप** आहार्यज्ञानम्। आहार्यज्ञानं नाम बाधज्ञाने सत्येवेच्छयोत्पादितं विपरीतज्ञानम्। यथा मुखे चन्द्रत्वारोपोऽचन्द्रत्वज्ञानकालिकेच्छाजनितः। आरोपेणेति तृतीयार्थो जन्यत्वं व्यापकारोपेऽन्वेति। वस्तुतो व्याप्यं यत् तत्प्रकारकाहार्यज्ञानजन्यत्वे सति वस्तुतो यद्व्यापकं तद्विषयकाहार्यज्ञानत्वं तर्कत्वम्। यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति वह्न्यभावारोपजन्ये धूमाभावारोपे लक्षणमस्ति। वह्न्यभावस्य व्याप्यत्वाद्धूमाभावस्य व्यापकत्वात्, यो वह्न्यभाववान् स धूमाभाववानिति व्याप्तिः। व्यापकविषयकाहार्यज्ञानत्वमात्रस्य लक्षणत्वे मुखे चन्द्रत्वारोपाद्यात्मके सर्वत्राहार्यज्ञानेऽतिव्याप्तिः। चन्द्रत्वादेरपि यत्किञ्चिद्व्यापकत्वात्तदारोपस्यापि व्यापकारोपत्वात्। अतो व्याप्यारोपजन्यत्वनिवेशः। चन्द्रत्वारोपस्तु केवलेच्छाजनितः, न पुनरारोपान्तरजन्य इति। व्याप्यविषयकाहार्यज्ञानजन्येत्यत्राहार्येत्यनिवेश्य व्याप्यविषयकज्ञानजन्येत्येतावदुक्तौ, स्थाणौ कदाचिन्नायं पुरुष इति बाधज्ञाने सत्येव यदा तन्निष्ठशाखादौ करादिभ्रमो भवति, करादिश्च पुरुषत्वव्याप्य इति, तादृशव्याप्यभ्रमादयं पुरुष इत्याहार्यज्ञानं जायते, तत्रातिव्याप्तिः। तन्निवेशे च करादिभ्रमस्याहार्यत्वाभावान्न दोषः। व्यापकारोप इत्यस्य व्यापकविषयकाहार्यज्ञानमित्यर्थकतया तत्राहार्यत्वानिवेशे शंखे पीतत्वव्याप्याभावरूपबाधज्ञाने सत्येव पीतत्वव्याप्यवान् शंख इत्याहार्यज्ञानम्, तज्जन्य-

**स्मृतिरपि द्विविधा, यथार्थाऽयथार्था चेति । प्रमाजन्या यथा-**

श्शंखः पीत इति भ्रमस्तत्रातिव्याप्तिः । इदं च नाहार्यज्ञानम्, तदा पीतत्वाभाववान् शंख इति बाधकज्ञानाभावात् । अतस्तन्निवेशः । उदाहरति यथेति । **यदि वह्निर्न स्यादिति** । अत्रेति शेषः । निरूपितत्वं तलर्थो धात्वर्थे सत्तायामन्वेति । तस्य नञर्थाभावे स्वप्रतियोगिकत्वसंबन्धेनान्वयः । वह्नेराधेयतासंम्बन्धेन नञर्थेऽन्वयः । यदिशब्दार्थः प्रयोजकत्वम् । तत्राभावस्याधेयतासम्बन्धेनान्वयः । स्यादिति लिङ्प्रयोगस्तु 'हेतुहेतुमतोर्लिङ्' इत्यनुशासनसिद्धो यदिपदस्य प्रयोजकत्वरूपार्थतात्पर्यग्राहकः । प्रयोजकत्वस्य धूमोऽपि न स्यादित्यत्र नञर्थाभावे निरूपकत्वसम्बन्धेनान्वयः । यदिशब्दार्थः प्रयोज्यत्वमेव वा । तर्हीत्यस्यापि पूर्वोक्तार्थप्रयोज्यत्वमेवार्थः । तच्च स्पष्टत्वाय पुनरुक्तम् । अत एव तर्हीतिपदं विनापि वाक्यप्रयोगः । यदिशब्दस्य तात्पर्यग्राहकत्वमङ्गीकृत्य प्रथमस्यात्पदस्याख्यातस्य प्रयोज्यत्वमर्थस्स्वीक्रियतामिति चेत् काममस्तु । परं तु क्रियापदं स्यात्प्रभृति विनापीदृशः प्रयोगो भवतीति तथोक्तम् । तथा चेदमर्थपर्वतादिनिरूपितसत्ताप्रतियोगिकवह्न्यनुयोगिकाभावप्रयोज्य इदमर्थानिरूपितसत्ताप्रतियोगिकधूमानुयोगिकाभाव इति बोधः । इतिशब्दार्थो विषयित्वम् । अभावस्य तत्रान्वयः । आरोप इत्यध्याहारः । तत्रैतदन्वयः । अत्र 'यदि वह्निर्न स्या' दित्यन्तं व्याप्यारोपजन्यत्वरूपदलोपपादनार्थम् । प्रकृततर्कस्य लक्ष्यभूतस्याकारस्तु धूमोऽपि न स्यादित्येतावानेव । तथा च 'यथा यदि वह्निर्नस्यादित्यारोपजन्यो धूमोऽपि न स्यादित्यारोप' इति लेखनमेव चिकीर्षितमिति ध्येयम् । पूर्वमनुभवलक्षणस्य स्मृतिघटितत्वात् स्मृतिरनुभवश्चेति विभज्य स्मृतिलक्षणं प्रथमत उक्तम् । अथ स्मृतिनिष्ठयथार्थत्वायथार्थत्वयोरनुभवनिष्ठयाथार्थ्यायाथार्थ्यनिबन्धनत्वाद्यथार्थायथार्थानुभवौ निरूप्य स्मृतावपि तं विभागं दर्शयति प्रमेत्यादिना । यथार्थस्मृत्यादिलक्षणं तु

र्था । अप्रमाजन्याऽयथार्था ॥

सर्वेषामनुकूलतया वेदनीयं सुखम् ।

सर्वेषां प्रतिकूलतया वेदनीयं दुःखम् ।

इच्छा कामः, क्रोधो द्वेषः, कृतिः प्रयत्नः ।

विहितकर्मजन्यो धर्मः ।

---

तद्वति तत्प्रकारकस्मृतित्वादिकमेवेति मन्तव्यम् ।

सर्वेषामिति षष्ठ्यर्थः समवेतत्वं वेदनेऽन्वेति । अनुकूलत्वमिच्छाविषयत्वम् । तथा चेच्छाविषयत्वप्रकारकसर्वसमवेतवेदनविषयस्सुखम् । पशुपुत्रादिवारणाय सर्वेषामिति । सुखसाधन पशुपुत्रादि चानुकूलतया वेदनीयं न सर्वेषाम् । केषांचित्तत्र द्वेषदर्शनात् । सर्वसमवेतवेदनविषयत्वं दुःखादावप्यस्तीति अनुकूलतयेति । वेदनीयमित्युक्तिस्तु सर्वेषामनुकूलत्वमनुभवसिद्धमिति प्रदर्शनार्थम् । न तु तदर्थस्य लक्षणे प्रवेशः । तथा च सर्वसमवेतेच्छाविषयत्वं लक्षणम् । अथ वेदं स्वरूपकथनम् । सुखत्वजातिरेव लक्षणमिति । प्रतिकूलतयेति । सर्वेषामित्यनुषङ्गः । आहिकण्टकादौ केषांचित्प्रतिकूलतया वेदनीयत्वमस्ति । सर्वसमवेतद्वेषविषयत्वं लक्षणमित्यादि पूर्ववत् । इच्छादीनां तत्तज्जातिमत्त्वमेवानुभवसिद्धं लक्षणमिति सूचयितुं पर्यायपदेन तानुत्कीर्तयति इच्छेत्यादिना । धर्मः पुण्यम् ; अधर्मः पापम् ; तयोर्लक्षणमाह विहितेत्यादिना । यागादयः फलसाधनत्वेन शास्त्रे चोदिताः । फलस्य बहुकालानन्तरभावित्वाद्यागादीनां चानुष्ठानसमय एव विनाशित्वान्न तेषां साक्षात्फलजनकत्वसंभव इति विधिबलान्मध्ये व्यापारः कल्प्यत इति स एव धर्मः । एवं निषेधस्थले निषिध्यमानस्य कलञ्जभक्षणादेः कालान्तरभाविदुःखजनकत्वस्य साक्षादसम्भवान्निषेधबलान्मध्ये व्यापारः कश्चिदनुमीयत इति स एवाधर्मः । न च

**निषिद्धकर्मजन्योऽधर्मः ।**

**बुद्ध्यादयोऽष्टात्ममात्रवृत्तिगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य, अनित्या जीवस्य । संस्कारस्त्रिविधः,**

---

वेदविहितकर्मजन्यत्वमेव धर्मलक्षणं वक्तव्यम्, अन्यथा बुद्धादिविहितकर्मजन्येऽतिव्याप्तिरिति वाच्यम् ; बुद्धादिभिः कर्मविधानेऽपि तस्य निष्फलत्वेन तज्जन्यस्यैवाप्रसिद्ध्याऽतिव्याप्त्यभावेन वेदेत्यस्यानावश्यकत्वात् । अत्र कर्मेत्यविवक्षितम्, विधिविषयजन्यत्वस्यैव पर्याप्तत्वात् । कर्मभिन्नेन द्रव्यादिना 'दध्नेन्द्रियकामस्य जुहुया'दित्यादौ धर्मोत्पादनस्य स्वीकृतत्वेन तत्राव्याप्तिप्रसङ्गाच्च । ननु विहितजन्यत्वं तद्ध्वंसेऽप्यस्ति । न च विधिविषयजन्यत्वे सति विध्युद्देश्यजनकत्वं धर्मत्वम् ; ध्वंसस्य च फलजनकत्वाभावान्नातिप्रसङ्ग इति वाच्यम् , व्रीहीनवहन्तीत्यादिविहितावहननादिजन्ये यागोपयोगिपुरोडाशाद्यर्थतण्डुलनिष्पत्त्यादिफलजनके वैतुष्यादावतिव्याप्तेरिति चेन्न । यत्साक्षादवहननादितस्सम्भवति, तस्यैव विध्युद्देश्यत्वात्तण्डुलनिष्पत्तेरनुद्देश्यत्वात् । वस्तुतो विध्यनुमितविहितनिरूपितजन्यतावत्वं धर्मलक्षणमिति न कश्चिद्दोषः । वैतुष्यादेरवहननादिजन्यत्वस्य लोकसिद्धत्वेन विधिबोधितत्वाभावात् । शब्दान्तगुणानां तत्तन्निरूपणावसर एव तत्तदाश्रयप्रदर्शनं कृतम् । बुद्ध्यादीनामधर्मान्तानां त्वेकवृत्तित्वेन वचनलाघवाय पृथक्पृथगनुक्त्वा तावन्निरूपणानन्तरं तं प्रदर्शयति बुद्ध्यादय इति । सुखदुःखद्वेषधर्माधर्माणामीश्वरेऽनङ्गीकर्तव्यत्वात्तेषां जीवमात्रनिष्ठानां कर्मायत्तानामनित्यत्वमेवेत्यभिसन्धाय ज्ञानेच्छाप्रयत्नानामुभयरूपत्वं दर्शयति बुद्धीति । ईश्वरस्येति । तस्य करणकलेवररहितत्वात्तदीयज्ञानादेः शरीरादिनिरपेक्षत्वादिति भावः । संस्कारत्वजातिमत्त्वं संस्कारलक्षणम् । विभजते **संस्कार** इति । वेगः इष्वादिषु जायमानया प्रथमक्रि-

**वेगो भावना स्थितस्थापकश्चेति । वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः । अनुभवजन्या स्मृतिहेतुः भावना । आत्ममात्रवृत्तिः ।**

---

ययोत्पाद्यते, क्रियान्तरं च जनयति दूरपातार्थं यस्स वेगः । पृथिव्यादिचतुष्टयं च मनश्च चतुष्टयमनसी तत्र वृत्तिर्यस्येति । भावनां लक्षयति **अनुभवे**ति । अनुभूतमेव स्मर्यत इत्यनुभवसिद्धम् । तदनुभवस्य स्मृतिकारणत्वमन्वयव्यतिरेकसिद्धं साक्षान्न भवति ; अनुभवे नष्टे बहुकालव्यवधानेन स्मृतेर्जायमानत्वात् । अतोऽत्र यागाद्धर्म इव मध्ये व्यापारः कश्चन कल्प्यते । सा भावना । अनुभवजन्यत्वमात्रोक्तावनुभवध्वंसेऽतिव्याप्तिः; स्मृतिहेतुत्वमात्रोक्तावात्मादावतिव्याप्तिरित्युभयनिवेशः । न चानुभवत्वावच्छिन्नजनकतानिरूपितजन्यतानिवेशान्नानुभवध्वंसेऽतिव्याप्तिः, ध्वंसं प्रति प्रतियोगिनस्तत्तद्व्यक्तित्वेन कारणत्वात् , अनुभवध्वंसं प्रत्यनुभवत्वेन कारणत्वमिति कार्यकारणभावानङ्गीकारादिति वाच्यम् । तथाऽपि स्मृतावनुभवजन्यत्वसत्त्वेनातिव्याप्तिवारणाय द्वितीयदलावश्यकत्वात् । ननु पूर्वं स्मृतिलक्षणे संस्कारमात्रजन्यत्वं निवेशितम् । तदत्र संस्कारलक्षणे स्मृतिहेतुत्वं निवेश्यत इत्यन्योन्याश्रय इति चेन्न ; तत्र संस्कारपदेन संस्कारत्वजातिमत एवोक्तत्वात्, भावनेत्यनुक्तत्वात्, अत्र संस्कारविशेषभावनालक्षण एव स्मृतिघटनाच्चादोषात् । यद्वाऽनुभवत्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वमित्यत्र जन्यत्वमव्यवहितोत्तरक्षणावच्छिन्नं ग्राह्यम् । एतत्सूचनाय **स्मृतिहेतु**रित्युक्तम् । स्मृतेश्च संस्कारव्यवधानेनैव जायमानतया नातिव्याप्तिः । न चैवमनुभवत्वावच्छिन्नेति निवेशो व्यर्थः अनुभवनिष्ठेति निवेश एवालम् । अनुभवध्वंसेऽतिव्याप्त्यभावात् । अनुभवस्य द्विक्षणावस्थायितया तृतीयक्षण एव ध्वंसस्योत्पद्यमानतया तत्राव्यवहितोत्तरक्षणावच्छिन्नजन्यत्वाभावादिति वाच्यम्; परामर्शात्मकानुभवजन्यायामनुमितावतिव्याप्तिवारणायानु-

**अन्यथा कृतस्य पुनस्तादवस्थ्यापादकः स्थितस्थापकः ।**

भवत्वावच्छिन्नत्वस्यावश्यकत्वात् । अस्य च लक्षणस्य प्राचीनमते सङ्गतत्वेऽपि नव्यमते न सामञ्जस्यम्; तन्मते स्मृतितोऽपि स्मृत्युत्पत्तेस्संस्कारोत्पत्तेश्च स्वीकृतत्वेन संस्कारजनकतायास्स्मृतावपि वर्तमानतयाऽनुभवत्वावच्छिन्नत्वासम्भवात् । अतः स्मृत्यनुभवसाधारण्येन ज्ञानत्वेनैव कारणत्वम् । न च तर्हि ज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वमित्येव लक्षणमुच्यतामिति वाच्यम्; ज्ञानस्येच्छां प्रत्यपि कारणतया तत्रातिव्याप्तेः । अतो नव्यमतानुसारे **स्मृतिहेतुरिति** लक्षणपरम् । स्मृतिहेतुत्वं कालादेरपीति स्मृतित्वावच्छिन्नजन्यतानिरूपितजनकतावत्त्वमिति वक्तव्यम् । संस्कारद्वारा ज्ञानस्यापि स्मृतिं प्रतिकारणत्वादतिव्याप्तिरित्यव्यवहितपूर्वक्षणावच्छिन्ना जनकता विवक्षणीया । ज्ञानस्य संस्कारव्यवधानेन कारणत्वाददोषः । अस्याव्यवहितपूर्वक्षणावच्छिन्नत्वस्य लाभायैवानुभवजन्येत्युक्तम् । अतो मतभेदेन लक्षणभेदमन्तराभिसंधाया-**नुभवजन्या स्मृतिहेतुरिति** भङ्ग्या निर्देशः । स्थितस्थापकं लक्षयति **अन्यथे**ति । **स्थितस्य** पूर्वकालसम्बन्धिविलक्षणसंस्थानजातीयस्य **स्थापकः** पुनरुत्पत्तिजनक इति शब्दार्थ एवात्र विवृतः । **अन्यथा** पूर्वसंयोगविलक्षणसंयोगवत्तया **कृतस्य** तादृशसंयोगवत्त्वप्रकारककृतिविषयस्य । आधेयत्वं षष्ठ्यर्थस्तादवस्थ्यान्वयि । साऽवस्था संस्थानं विलक्षणसंयोगो यस्य तत् तदवस्थम् । तस्य भावस्तादवस्थ्यम् । तदापादक उत्पादकः । धात्वर्थ उत्पत्तौ पुनरित्यस्यान्वयः । पुनःशब्दः पूर्वकालिकसत्त्वप्रतियोगिकाभावाधिकरणकालानन्तरकालवृत्तित्वार्थकः । तथा च पूर्वसंयोगविजातीयसंयोगवद्वस्तुनिष्ठपूर्वसंयोगसजातीयसंयोगप्रयोजकः स्थितस्थापक इत्यर्थः । अत्र नायं साक्षात् तादृशसंयोगजनकः; अपि तु वेग इव कटादौ तादृशसंयोगानुकूल-

**कटादिपृथिवीमात्रवृत्तिः ।**

**चलनात्मकं कर्म । ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरवक्षेपणम् । शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम् । शरीरविप्रकृष्टसंयोगहेतुःप्रसारणम् । अन्यत्सर्वं गमनम् ॥**

**नित्यमेकमनेकानुगतं सामान्यम् । द्रव्यगुणकर्मवृत्ति । परं सत्ता । अपरं द्रव्यत्वादि ॥**

---

क्रियाजनकः । सा च क्रिया विद्यमानं संयोगविशेषं विनाश्य पूर्वस्थितजातीयं संयोगमुत्पादयतीति ध्येयम् ।

**कटादीति** । तालकृतो हि कट आकुञ्चित एव रक्षितः कदाचित् प्रसारितोऽपि संस्कारविशेषात् पुनर्वेष्टनमेव लभत इति । आदिना शाखादिपरिग्रहः । शाखादिकं ह्यवनमितं विसृज्यमानं पुनः पूर्वदेशावच्छेदेन संस्कारवशात् संयोगं लभत इति ॥

एवं गुणा निरूपिताः । कर्म निरूपयति **चलनेति** । चलतीति प्रतीतिसाक्षिकं कर्मत्वं जातिविशेषः । **हेतुरिति** । कर्मेति शेषः । कन्तुकमुत्क्षिपति, नारिकेलमवक्षिपतीत्यादौ प्रतीयमानमिदं कर्म । प्रसारितस्य शरीरावयवस्य पुनः सन्निकृष्टदेशे संयोग आकुञ्चनेन भवति । स्वाश्रयावयवभिन्नभूयोऽवयवसन्निकृष्टदेशावच्छिन्नस्वाश्रयसंयोगहेतुः क्रिया आकुञ्चनम् । एवं प्रसारणमपि विप्रकृष्टघटितम् । **अन्यत्** उक्तचतुष्टयभिन्नम् । **सर्वं** भ्रमणरेचनस्पन्दनादि ॥ सामान्यं लक्षयति **नित्यमिति** । **अनुगतम्** समवेतम् । **एकमिति** न लक्षणघटकम् । नित्यत्वे सत्यनेकसमवेतत्वं लक्षणम् । संयोगवारणाय नित्यत्वम् । आकाशादिवारणाय द्वितीयम् । परमाण्वेकत्वादिवारणायानेकेति । घटाभावादिवारणाय समवायसंबन्धनिवेशः । **परमिति** जातित्वावच्छिन्नव्यापकजातिरित्यर्थः । **अपर**-

**नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ।**

**नित्यसम्बन्धः समवायः । अयुतसिद्धवृत्तिः । ययोर्मध्ये एक-**

---

मिति । किञ्चिज्जातिव्याप्यजातिरित्यर्थः । **आदिना** घटत्वादिग्रहणम् । विशेषं लक्षयति **नित्येति** । **व्यावर्तकाः** व्यावृत्तिबुद्धिजनका इतरभिन्नत्वानुमितिजनकाः । **नित्यद्रव्यवृत्तयो व्यावर्तका** इत्यनेन नित्यद्रव्येषु व्यावृत्तिबुद्धिजनकाः परमाणुविशेष्यकपरस्परव्यावृत्त्यनुमितिजनका इत्युक्तं भवति । तथा हि—लोके घटपटादीनां व्यावृत्तिबुद्धिराकारवैषम्यादिना भवति, न तथा परमाणुषु ; तत्र रूपरसादिगुणादैकरूप्यात् कृशत्वस्थूलत्वाद्यभावात् अनाश्रितानां तेषामाश्रयवैलक्षण्यस्यापि दुर्वचत्वात् । अतस्तत्र पारस्परिकव्यावृत्तिबोधो यस्माद्भवति, स कश्चिदतिरिक्तः प्रतिपरमाणु भिन्नो विशेषकत्वेनैव सिद्ध्यन् विशेष इत्युच्यते । ननु विशेषेषु परस्परव्यावृत्तिज्ञानं कथमिति चेत्, अनवस्थाभयात्ते परं स्वात्मनैव स्वव्यावर्तका इष्यन्त इति स्वतो व्यावृत्ता इति । गन्धवत्त्वादेरपि पृथिव्यादौ व्यावृत्त्यनुमितिजनकत्वादतिव्याप्तिरिति परमाणुविशेष्यकेति । परमाणुः स्पर्शवान् स्पर्शवत्समवायिकारणत्वादित्यत्र हेतोः परमाणुविशेष्यकानुमितिजनकत्वात्तत्र हेतावतिव्याप्तिरिति परस्परव्यावृत्तीति । पूर्वं ग्रन्थारम्भे **नित्यद्रव्यवृत्तय** इत्युक्तिर्नित्यद्रव्याणां परमाणूनामनन्तत्वात् विशेषाणामनन्तत्वमिति बोधनार्थम् ; अधुना तु लक्षणे परमाणुविशेष्यकत्वरूपविशेषणलाभार्थम् । **नित्येति** । नित्यत्वे सति सम्बन्धत्वं लक्षणम् । संयोगसम्बन्धवारणायाद्यम् । गगनादिवारणायान्त्यम् । यु-मिश्रणामिश्रणयोरिति युतौ अमिश्रितौ सिद्धौ युतसिद्धौ पृथक्सिद्धावित्यर्थः । अयुतसिद्धावपृथक्सिद्धौ सम्बद्धावेव सिद्धाविति व्युत्पत्तिलभ्यमयुतसिद्धशब्दार्थमाह **ययो-रिति** । **ययोर्घटा**दिकपालाद्योः । **एकं** घटादि । **अपराश्रितं** अन्या-

**मविनश्यदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । यथा, अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति ।**

---

श्रितं कपालादिनिष्ठम् । **ययोरिति** षष्ठ्यर्थ आधेयत्वम् । मध्यशब्दार्थो घटितत्वम् । निरूपकत्वं सप्तम्यर्थ एकापरपदार्थान्वयि । **अविनश्यदवस्थम्** विनश्यतोऽवस्था यस्य तद्विनश्यदवस्थम् । विनश्यदिति वर्तमानसामीप्ये वर्तमाननिर्देशः । तथा चाव्यवहितोत्तरक्षणावच्छिन्ननाशप्रतियोगिना याऽवस्था दशा यावत्स्वनाशकारणसामग्रीमिलितत्वं नाशोत्पत्त्यव्यवहितपूर्वक्षणवृत्तित्वं वा तद्विशिष्टम् । एवं च स्वनाशोत्पत्त्यव्यवहितपूर्वक्षणावच्छिन्नं विनश्यदवस्थम् । तद्भिन्नमविनश्यदवस्थम् । एवकारार्थो व्यापकत्वम् । अविनश्यदवस्थैकनिष्ठसत्ताव्यापकत्वं अपराश्रितस्य तादात्म्यसम्बन्धेन । तथा च ययोर्मध्येऽविनश्यदवस्थैकनिष्ठसत्ताव्यापकापराश्रितनिष्ठसत्तावदविनश्यदवस्थमेकम्, तावयुतसिद्धाविति बोधः । इत्थं च स्व, स्वनाशाव्यवहितप्राक्क्षणीयभिन्नस्वसत्ताव्यापकस्वनिष्ठाधेयतानिरूपकोभयमयुतसिद्धमिति । घटनाशाव्यवहितपूर्वक्षणीयभिन्ना तदितरक्षणनिरूपिता या घटसत्ता, तद्व्यापिकैव घटस्य कपालनिरूपिताधेयतेति तदुभयमयुतसिद्धम् । अत्र व्याप्यव्यापकभावः कालिकसम्बन्धेन । आश्रयनाशाद्घटनाशस्याङ्गीकर्तव्यतयाऽऽश्रयभूतकपालनाशकालेऽपि घटसत्ताऽस्ति ; तत्र च न कपालनिष्ठेतेति व्यापकत्वभङ्ग इति स्वनाशाव्यवहितपूर्वक्षणीयभिन्नत्वनिवेशः । नन्वाश्रयनाशानन्तरमसमवायिकारणनाशस्ततो घटनाश इत्येव सिद्धान्त इति घटनाशाव्यवहितपूर्वक्षणीयाभिन्ना घटसत्ता आश्रयनाशकालिकसत्ताऽपि भवति ? तत्र कपालसत्ता नास्तीति व्यापकत्वभङ्ग इति चेन्न, अव्यवहितपूर्वक्षणेत्यनेन तादृशक्षणद्वयमपि विवक्षितमित्यदोषात् । ननु जातिव्यक्त्यादिष्वयुतसिद्धत्वं न सिद्ध्यति, तत्र स्वपदेन जातिपरिग्रहे तन्ना-

शाप्रसिद्ध्या लक्षणसङ्गमनासम्भवात् । तथा जात्यादिसत्ताव्यापकत्वमपि घटादिनिरूपिताधेयतायां न भवति । जात्यादेः सर्वदा सत्त्वात् कस्यापि घटस्य तावत्कालवृत्तित्वाभावादिति चेन्न ; विनाश्याधेयघटितायुतसिद्ध्योरेवेदं लक्षणम् । नित्याधेयघटितायुतसिद्ध्योऽस्तु, स्व, स्वसत्ताव्यापकस्वनिष्ठाधिकरणतानिरूपकोभयत्वमेव लक्षणम् । यदा घटसत्ता तदा घटनिष्ठा घटत्वादिजातिनिरूपिताधिकरणतेति समन्वयः । तथा च तादृशोभयत्वैतादृशोभयत्वान्यतरवत्त्वमयुतसिद्धत्वम् । अथ वा नाशाव्यवहितप्राक्क्षणीयत्वसम्बन्धेन स्वाभाववत्स्वसत्ताव्यापकस्वनिष्ठाधेयत्वाधिकरणत्वान्यतरनिरूपकं यत् यच्च स्वं तदुभयत्वमयुतसिद्धत्वम् । स्वपदेनाधिकरणग्रहणात्तन्निष्ठाधिकरणतानिरूपकजातेस्तस्य चायुतसिद्धत्वम् । स्वपदेनाधेयग्रहणात्तन्निष्ठाधेयतानिरूपककपालस्य तस्य चायुतसिद्धत्वम् । परमाणुतद्विशेषयोर्लक्षणसमन्वये च नाशेत्यादिव्यधिकरणसम्बन्ध इति । अत्र चाधेयताधिकरणता च कालिकसम्बन्धानवच्छिन्ना ग्राह्या । तेन रूपादेर्महाकालस्य च कालिकसम्बन्धेन सम्बद्धयोरपि नायुतसिद्धत्वम् । न चेश्वरज्ञाने विषयितासम्बन्धेन सर्वस्य सत्त्वात् सर्वस्य तस्य चायुतसिद्धत्वापत्तिरिति वाच्यम् ; विषयितासम्बन्धस्य वृत्त्यनियामकतया लक्षणघटकमुख्याधाराधेयभावस्य तत्राभावात् । ननु सामान्यत्वविशेषत्वसमवायत्वादीनां तत्तदाश्रयाणां चायुतसिद्धत्वात् तत्रापि समवायसम्बन्धः स्यादिति चेन्न । सप्तपदार्थातिरिक्तपदार्थानङ्गीकारात् सामान्यत्वादीनां धर्म्यपेक्षयाऽतिरिक्तत्वाभावात् सर्वथा तत्र परस्परं मुख्याधाराधेयभावास्वीकारेणायुतसिद्धत्वस्यैवानुपगमेन तत्र समवायसम्बन्धाप्रसक्तेः । **तावयुतसिद्धाविति** । सिद्धिर्नामाविनश्यदवस्थीया सत्ता । अयुतत्वं चाधेयत्वाधिकरणत्वान्यतरनिरूपकत्वम् । मिश्रितसिद्धावित्यनुक्त्वा अयुतसिद्धावित्यनेन नामिश्रितसिद्धाविति

**अनादिः सान्तः प्रागभावः । उत्पत्तेः पूर्वं कार्यस्य ।**

**सादिरनन्तः प्रध्वंसाभावः । उत्पत्तेरनन्तरं कार्यस्य ।**

**त्रैकालिकसंसर्गाभावोऽत्यन्ताभावः । यथा, भूतले घटो नास्तीति । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽन्योन्याभावः यथा, घटः पटो न भवतीति ।**

---

नन्द्वयार्थवचनं लक्षणघटकव्यापकत्वज्ञापनायेति भावः । यद्यप्येकमिति क्लीबनिर्देशानुसारेण 'ते अयुतसिद्धे' इति वक्तुं युक्तम्, अथापि पटाद्यभिप्रायेण पुंलिङ्गोक्तिः ।

अन्तिमं पदार्थं निरूपयति **अनादिरि**त्यादिना । **आदिः** कारणम् , अथ वाऽऽरम्भ उत्पत्तिरिति यावत् । **सान्त** इत्यन्तो ध्वंसः । सहितत्वं प्रतियोगितासम्बन्धेन । तथा चोत्पत्त्यभाववत्त्वे सति ध्वंसप्रतियोगित्वं प्रागभावलक्षणम् । घटगगनवारणाय दलद्वयम् । **कार्यस्ये**ति । अभाव इति शेषः । **सादिः** उत्पत्त्याश्रयः । **अनन्तः** ध्वंसाप्रतियोगी । न च ध्वंसलक्षणे ध्वंसप्रवेश आत्माश्रय इति वाच्यम्, उत्तरदलस्य लक्षणाघटकत्वात् । उत्पत्त्याश्रयत्वे सत्यभावत्वमित्येव लक्षणे तात्पर्यात् । घटादिवारणाय द्वितीयदलम् । **त्रैकालिकः** त्रिषु कालेषु वर्तत इति । कालत्रयवर्तित्वं प्रागभावेऽप्यास्ति ; श्वो जनिष्यमाणस्य घटस्य प्रागभावो वर्तमानक्षणे तत्पूर्वकाल उत्तरकाले चास्तीति । अतः कालिकसम्बन्धेन कालत्वव्यापकत्वं वक्तव्यम् । अथ वा प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं तत् । **संसर्गाभाव** इत्यन्योन्याभावभिन्नाभावे परिभाषा । तथा च तादात्म्यसम्बन्धानवच्छिन्नप्रतियोगिताकाभावत्वं संसर्गाभावत्वम् । तादात्म्यसम्बन्धातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमत्यन्ताभावस्य लक्षणम् । ध्वंसप्रागभावयोः सम्बन्धावच्छिन्नप्रतियोगिताकत्वं नाङ्गीक्रियते । **इती**ति, उक्तशब्दगम्य इत्यर्थः ।

**सर्वेषामपि पदार्थानामुक्तेष्वेवान्तर्भावात् सप्तैव पदार्था इति सिद्धम् ।**

**काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।**
**अन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रहः ॥**

**इति तर्कसंग्रहः समाप्तः ।**

---

एवं सप्त पदार्था विभज्य संग्रहेण निरूपिताः । अथ शक्त्यादिरन्यैः पार्थक्येन स्वीकृतोऽपि यथायथमत्रैवान्तर्भवति, एवं न्यायदर्शनोक्ताः षोडश पदार्था अपीति न सप्तधा विभजनमयुक्तमित्याह **सर्वेषामिति** । **अन्तर्भावो** घटकत्वमसाधारणधर्मवत्त्वम् । उक्तवृत्त्यसाधारणधर्मवत्त्वात् । इतीति । उक्तानुपूर्व्यवच्छिन्नशब्दप्रमेयमित्यर्थः । **सिद्धम**बाधितम् । ज्ञानज्ञाप्यत्वमन्तर्भावादिति पञ्चम्यर्थः । अथ वा **सिद्धम**बाधितत्वप्रकारकानुमितिविषयः । तदा पञ्चम्यर्थोऽनुमित्यन्वयि प्रयोज्यत्वम् । यद्वा **सप्तैव पदार्था इतीति** । एतदानुपूर्वीकवाक्यमित्यर्थः । **सिद्धम**बाधितार्थकम् । पञ्चम्यर्थो ज्ञानज्ञाप्यत्वम् । तथा च सप्तैव पदार्था इति वाक्यमबाधितार्थकं पदार्थत्वव्यापकस्वप्रतिपाद्यार्थघटकताकत्वादित्यनुनुमानम् ।

नन्विदं किं कणाददर्शनमनुरुध्य, किं वा गौतमदर्शनं ? नाद्यः, तत्र प्रत्यक्षमनुमानमिति प्रमाणद्वयमेव न्यरूपि । शब्दोपमानयोश्चानुमान एवान्तर्भावोऽभिसंहितः । अत्र पुनस्तयोः पार्थक्यं प्रादर्शीति विरोधात् । नान्त्यः, तत्र सप्तानां पदार्थानां निरूपणक्रमानुपलम्भादित्युभयदर्शिनामाशङ्कां परिहरन् ग्रन्थं समापयति **काणादेति** । काणादे न्यायमते च । व्युत्पत्तावेतदन्वयः । व्युत्पत्तिश्शब्दार्थज्ञानम् । **सिद्धये** निष्पत्तये । उद्दे-

श्यत्वं चतुर्थ्यर्थो रचनान्वयि । अन्नम्भट्टेनेति तृतीयार्थः कर्तृत्वम् । तथा च बालसमवेतकाणादन्यायमतविषयकज्ञानोत्पत्त्युद्देश्यकविद्वदभिन्नान्नम्भट्ट-निष्ठकृतिजन्यरचनाजन्यफलाश्रयस्तर्कसंग्रह इति बोधः । अयं भावः—ग्रन्थोऽयं न केवलं कणादमतमनुसृत्य , न वा केवलं न्यायमतम् । कणादो महर्षिः प्रमेयस्य निरूपण एवैदम्पर्यमुवाह ; गौतमश्च महर्षिः प्रमाणस्य । प्रथमः स्वयमतत्परतया शब्दोपमानयोरुपमानस्यात्यन्तोपयोगविरहमाकलयमानो न तन्नयरूपयत् । शब्दस्य चानुमानादपार्थक्येऽपि न कथञ्चिदाम्नाय-प्रामाण्याद्यभीष्टविहतिप्रसक्तिरित्यभिसन्धाय न तदतिरेकसाधने प्रावर्तिष्ट । अनन्तरः पुनःप्रमाणविवेचनव्यग्रो वस्तुतत्त्वव्युत्पिपादयिषया शब्दोपमानयोः प्रमाणान्तरतां प्रादर्शयत् । सप्तधा पदार्थविभजनमनिष्टममन्वानोऽप्यनुमानप्रमाणं सप्रपञ्चं बुबोधयिषुस्तदर्थे षोडशधा पदार्थान् पर्यजगणतेति न सर्वथा विरोधप्रदर्शने यतितव्यम् । दृश्यते च परस्परसिद्धानामर्थानामुपजीवनं प्रायश उभयोरपि । तदिदमुभयं समानतन्त्रमेवेति व्याख्यातारस्तत्तदुक्तोपपन्नप्रमाणप्रमेयग्रहणेनैकतन्त्र्यमेवोभयोः समर्पिपदन्निति, तदनुरुध्य ग्रन्थोऽयं प्राणीयतेति नात्र मात्रयाऽपि विदुषः प्रबन्धे प्रामादिकं मन्तव्यम् । अपि तु विश्वस्य यथोक्तमुपपन्नमध्यवसाय सर्वदर्शनोपयोगीदं समादर्तव्यमिति ।

श्रीमत्कस्तूरिरङ्गार्यप्रसिद्धाचार्यशिष्यतः ।
स्वच्छन्दश्रीनिवासार्यगुरोः प्रज्ञादयानिधेः ॥ १ ॥

अधीततर्कशास्त्रो यः शिरोमणिरिति श्रुतः ।
यो मीमांसासुधास्वादं बालप्रौढमनोहरम् ॥ २ ॥

व्याख्यानमापदेवीयप्रकाशस्य प्रणीतवान् ।
वेदान्ते च कृतोः काश्चिदन्यदप्युपकारकम् ॥ ३ ॥

वीरराघवसंज्ञेन वात्स्येनैतेन धीमता ।
तर्कार्णवेन 'सौकर्यं स्यादध्यापयता'मिति ॥ ४ ॥

'वर्धतां पठतामत्र व्युत्पत्ति'रिति चादरम् ।
वहता विहिता सेयं तर्कसंग्रहटिप्पणी ॥ ५ ॥

---

अयमञ्जनशैलशृङ्गधामा गुणधामाऽञ्जनवर्णदिव्यधामा ।
परितुष्यति पद्मया किमन्यैरथ वा तोषयतु स्वयं स सर्वम् ॥ ६ ॥

श्रीरस्तु ॥

